चातुस्त्रिशत्(त्रिंशत्) सप्तानुपमितभवने दौर्गमस्त्रं तु मध्यात्
बाह्ये तारेशपत्रे बलारिपुमुखतः शूलिनीमन्त्रवर्णान् ।
अश्राशेशानिभाश्रे निखिललिपिवृतं साध्यमाजाभिवीतं
नानालोकैकरक्षाकरमपि दुरितक्षुद्रभूतारिवज्रम् ।। ७७

सीसेऽयसि हिरण्ये वा त्रयमा(द्वयमा)लिख्य यन्त्रकम् ।
दिवसाष्टकमाराध्य जप्त्वा दशशतं दिनम् ।। ७८

मन्त्रं साध्यत्रयोपेतं सावधानेन चेतसा ।
बन्धयेत्सर्वरक्षार्यं क्षुद्रभूतादिशान्तये ।। ७९

तैलाभ्यङ्गाभिषेकाभ्यां धूपनस्याञ्जनैस्तथा ।
भस्माभिमर्शहोमाभ्यां रक्षया द्विजभोजनैः ।। ८०

स्वदेवतावलोकेन क्रमेण निखिलात्मनाम् ।
मोक्षयेत्स्थूलसूक्ष्माभ्यां क्षुद्रभूतग्रहादिकान् ।। ८१

[1] स्त्रेऽस्त्रबीजं समुद्धृत्य ज्वालामालिनि तत्परम् ।
विद्महे तु ततःपश्चात् महाशूलिनि तत्परम् ।
धीमहीति ततःपश्चात् तन्नो दुर्गा प्रचोदयात् ।। ८२

महादुर्गास्त्रमन्त्रोऽयं महादुरितनाशनः ।
निग्रहानुग्रहकरो निखिलाभीष्टदायकः ।। ८३

नानाप्रयोगभेदेषु मूलं जप्त्वा विधानतः ।
सिध्य(न्तं)र्थमस्त्रमन्त्रेण मिश्रितं प्रजपेत्ततः ।। ८४

---

1. "ज्वालामालिनि विद्महे महाशूलिनि धीमहि तन्नो दुर्गा प्रचोदयात्" इति परम्परागतशूलिनीगायत्रीमन्त्रः ।

[1] विन्दौ लक्ष्मीं हुतवहपुटे मारगायत्रिवर्णान्
मायां सन्धौ स्वरदललसच्छूलिनीमन्त्रवर्णान् ।
भूमौ लक्ष्मीं तदनु लिपिभिर्वेष्टितं साध्यभेदैः
सत्सन्तानप्रदमघहरं विश्वसौभाग्ययन्त्रम् ॥ ८५

अवन्ध्यानां कुलस्त्रीणामाशु सन्तानसिद्धये ।
यन्त्रमाराध्य पश्चाहं बन्धयेन्मन्त्रवित्तमः ॥ ८६

हुङ्कारं(पद्म)वृत्तमध्ये पवनसखपुटे पावकोच्चाटवीजं
फट्कारं चार्कपत्रे सकलभुवनकोच्चाटवर्णान् स्वराश्रे
मूलं मायाभिवीतं सह मरुदखिलं पावकः(कं) सर्वसन्धौ
भूतप्रेताहिदुष्टग्रहगणदुरितोच्चाटसंहारयन्त्रम् ॥ ८७

समस्तानां च वन्ध्यानां सत्सन्तानस्य सिद्धये[2] ।
तत्तद्यन्त्रेण वै तच्च समाराध्य पटान्तरे ॥ ८८

तत्तद्यन्त्रोत्थसिध्यै च तत्तद्दुरितशान्तये ।
जप्त्वा मन्त्री त्रिसाहस्रं बन्धयेत्सावधानतः ॥ ८९

---

1. विन्दौ लक्ष्मीं हुतवहपुटेति - प्रथमं षट्कोणं विलिख्य पुनः षोडशदलं ततः भूपुरम् । ततः षट्कोणं मध्ये बिन्दुं तदन्तः श्रीवीजं षट्कोणकोणेषु ''कामदेवायेति''गारगायत्रीवर्णान् । षट्कोणकपोलेषु मायाबीजं श्रीमिति(?) पुनः षोडशदलेषु शूलिनीवर्णान् । चतुरश्रकोणेषु श्रीबीजं, तद्बहिः मातृकार्णैः साध्यपुटितैः वेष्टयेत् ।

2. सद्यःसर्वार्थसिद्धये इति मा० *12166* ।

निग्रहानुग्रहाभ्यां यःकर्मभ्यां सर्वयोषिताम् ।
संस्कृत्य बन्धयेद्रक्षां सहसा पुत्रसिद्धये ।। ९०

भर्तृविरोधदोषशमनयन्त्रम् —

भर्तृस्नेहयन्त्रम् —

स्वकान्तवश्ययन्त्रम् च —

कोष्ठे षोडशसम्मिते प्रतिगृहं लिख्यारणाग्नेः पुरं
तारस्मारवसूदरे मनुमजापूर्वं मणिं मर्मसु ।
शूलाग्रेषु च साध्यनाम निखिलैर्वर्णैः समावेष्टितं
यन्त्रं भर्तृविरोधदोषशमनं सन्तानदं योषिताम् ।। ९१

यन्त्रमेतत्समालिख्य चन्दनादिषु वस्तुषु ।
हरिद्रे वा समाराध्य जप्त्वा नित्यं सहस्र(कम्)शः ।। ९२

शुक्लप्रतिपदारभ्य पूर्णिमान्तं दृढव्रतः ।
बन्धयेद्योषितां कण्ठे भर्तृकोपप्रशान्तये ।। ९३

सन्तानसिद्धये सर्वसौख्याय शुभवृद्धये । ९४

वेदद्वन्द्वगृहोदरारणिशिखौ लक्ष्मीन्दुमायोदरे
शूलं रत्नसमन्वितं[1] स्मरविधौ(विधू) मर्म त्रिशूलाङ्कितम् ।
तारस्मारसमस्तवर्णविवृतं यन्त्रं महामोहनं
भर्तृस्नेहसुखावहं तनयदं दिव्यं सपत्नीजयम् ।। ९५

हिरण्ये यन्त्रमालिख्य रजतादिषु वांशुके ।
आराध्य गन्धपुष्पेण पक्षं नित्यं सहस्रकम् ।। ९६

---

1. मूलं रत्नपुरःसरं

अभिमन्त्र्य ततोऽभ्यर्च्य स्नातां योषामुपोषिताम् ।
धारयेद् भर्तृवश्याय सपत्नीविजयाय वै ॥ ९७

सत्सन्तानसमृद्ध्यै च सर्वकामार्थसिद्धये ॥ ९८

पञ्चेभास्रचतुस्त्रिकोणविवरे ठं वं ज्रूं जुंसान्वितं
मूलं पङ्क्तिगथा तथैव वसुधाममर्मस्ववनङ्गेन्दिरे ।
शूलाग्रे प्रणवाभिधानलिपिभिः संवेष्टितं श्रीप्रदं
सर्वक्षुद्रहरं ज्वरादिशमनं गर्भाभिवृद्धिप्रदम् ॥ ९९

ऊर्ध्वं तिर्यगृषीशगेहकबहिः पङ्क्त्या द्विमध्ये तथा
रत्नं चन्द्रसमा(श्मा)वृतं स्मरयुतं मूलं चतुष्के चतुः ।
सन्धौ वाचमशेषशूलदलयोर्मायां च साध्यावृतं
यन्त्रं पुष्टिकरं स्वकान्तवशदं गर्भाभिवृद्धिप्रदम् ॥ १००

यन्त्रद्वयं हिरण्ये वा रूप्ये वा पञ्चलोहके ।
आलिख्याराध्य सप्ताहं अभिमृश्य यथा पुरा ॥ १०१

अभिषिच्य ततो बद्ध्वा त्वस्तुन्यामन्त्र्य मन्त्रवित् ।
कारयेदिष्टकर्माणि सर्वाभीष्टार्थसिद्धये ॥ १०२

*मध्ये मायां हुतवहपुटे शक्तिषट्कं सचन्द्रं
नागाश्रे मां स्वरदलगृहे(कमले) शूलिनीमन्त्रवर्णम् ।
नामावीतं मणिलिपिवृतं काककाकाख्यवन्ध्या-
[1] सत्सन्तानप्रदमघमुखाशेषदुष्टाहितार्क्ष्यम् ॥ १०३

---

टीका — मध्ये मायामिति — प्रथमं षट्कोणं तदन्तः वृत्तं तदन्तः हुमिति, षट्कोणे वं इति वरुणबीजं, पुनर्द्वादशदलेषु (दलानि) तद्बहिः षोडशारं विलिख्य तन्मध्ये साध्यवायुबीजं पुनर्वृत्तत्रयं

1. सत्सन्तानप्रदमिदमखिलो ...

शुक्रे चन्द्रं शिखिपुटगृहे मारषट्कं सबीजं
वारेशाश्रे मणिमिनयुतं शूलिनीं षोडशारे ।
नाम्नावीतं लिपिपरिवृतं जन्मजन्माख्यवन्ध्या-
दोषध्वान्तप्रलयखमणिः पुत्रदं शत्रुवज्रम् ॥ १०४

चन्द्रे चन्द्रसुबीजपञ्चकमथो सप्ताश्रके मामजां
सूर्याश्रे मणिबीजमब्जदलके श्रीशूलिनीं सस्मराम् ।
बाह्ये साध्यरमावृतं लिपिवृतं श्रीजन्मकाकाख्यस-
द्वन्ध्यागर्भकरं त्रिलोकदुरितक्ष्वेलज्वरौघापहम् ॥ १०५

मध्ये मन्मथमग्निकोणविवरे चिन्तामणिं तत्पुटे
जिष्णुं चन्द्रसमन्वितं वसुगृहे श्रीशूलिनीयं मनुम् ।
ग्लां क्लां सूर्यसमन्वितं दशदले साध्याखिलार्णावृतं
यन्त्रं जन्ममृताख्यवन्ध्यवनितासन्तानसौभाग्यदम् ॥ १०६

मायां चन्द्रे हुतवहगृहे कामराजं ससूर्यं
षट्कोणान्तर्बलरिपुयुतं मूलबीजप्रभेदम् ।
अस्त्रेशाश्रे मणिमिभयुगे शूलिनीं साध्यबाह्यं
यन्त्रं पुत्रप्रदमखिलसत्काकजन्माघवज्रम् ॥ १०७

---

— आद्ये मूलेन, द्वितीये मायया तृतीये वायुना वेष्टयेत् । सर्वसन्धिरेखायां वह्निबीजं विलिखेदिति । शुक्रे चन्द्रमिति — अयमर्थः — प्रथमं पञ्चकोणं विलिख्य तदन्तः वृत्तं, तद्बहिः षट्कोणं, षट्सु कोणेषु कामबीजम् । सबीजकमिति कामबीजम् । तद्बहिरर्धचन्द्राकारं, वारुणपुरकोणे(?)अर्धनारीश्वर-चिन्तमणिबीजं सप्तविंशतिपटले वक्ष्यमाणं विलिख्य तद्बहिः वृत्तं विलिख्य तद्बहि षोडशदलेषु शूलिनीमन्त्रवर्णान् विलिखेदिति ॥

मध्ये भास्करमग्निकोणशशिनं षट्कोणवैश्वानरं
वस्वब्जे(श्रे)मणिमब्जपत्रविवरे [1]श्रीमत्त्रिशूलाम्बिकाम् ।
"यस्तेगर्भम" थेभवेदविरे साध्याखिलार्णावृतं
यन्त्रं काकमृताख्यवन्ध्यवनितासन्तानसौभाग्यदम्[2] ॥

शिखिमध्यचन्द्रं शिखिकोण(लक्ष्म)सूर्यं
शिखियुग्ममारं क्षितियुग्मरत्नम् ।
वसुपत्रमन्त्रं स्मरनामबाह्यं
मृतजन्मवन्ध्यासुतदं त्वमोघम् (प्रशस्तम्) ॥ १०९

शशिरत्नलक्ष्मीं शिखिकाममायां
ऋतुभानुवह्निं वसुशूलिनीयम् ।
परितोऽखिलार्णं मणिनामबाह्यं
मृतकाकवन्ध्यासुतदं त्वमोघम् ॥ ११०

हुतवहरसकीले रत्नचन्द्रार्कवह्नीन्
स्मरयुतमखिलार्णं शूलिनीं षोडशारे ।
स्मरमणिलिपिवीतं साध्यपूर्णं वधूनां
जनिमृतसुतवन्ध्या पुत्रसञ्जीवनं तत् ॥ १११

मामायास्मररत्नबीजसुषिरप्ल्यूंकारवैश्वानरं
प्ल्यूं(ब्लूं)काराङ्कितकोणषट्कमनुमाश्रीशूलिनीभाश्रकम् ।
"यस्ते हन्ति" ऋचा(चं) खगाश्रविवरे रत्नाङ्कवैश्वानरं
यन्त्रं जातमृताख्यवन्ध्यवनितासन्तानसिद्धिप्रदम् ॥ ११२

---

1. श्रीशूलिनीं साम्बिकाम् ।
2. सन्तानसिद्धिप्रदम् इति मा. *12166*.

एतानि दिव्ययन्त्राणि सद्यः सिद्धिप्रदानि वै ।
जन्म काकमृताख्यानां दिगिनेन्ददिनक्रमात् ॥ ११३

साङ्गं द्विसन्ध्यमाराध्य जप्त्वा यन्त्राणि संस्पृशन् ।
भस्मनाऽऽमन्त्र्य सर्वाङ्गं द्विसन्ध्यमभिषिच्य च ॥ ११४

प्राशयित्वाऽभिमन्त्र्याज्यं उपदिश्य फलप्रदम् (फलावृतम्) ।
वन्ध्ययेद्योषितां रक्षां सद्यः सन्तान सिद्धये ॥ ११५

अवधानकृतं कर्म सद्यः सिध्यति (फलति) योषिताम् ।
तस्मादेतानि कर्माणि साधयेत्सावधानतः ॥ ११६

चन्द्रे कामं च पद्मां ऋतुगृहविवरे बीजयुग्मस्य षट्कं
वस्वब्जे रत्नवर्णं स्वरदलकमले शूलिनीमूलमन्त्रम् ।
भूमौ मायां सकामं सकललिपिवृतं साध्यनामार्णवाह्यं
यन्त्रं श्रीजन्मवन्ध्यातनयकरमिदं पुष्टितुष्टिप्रदं च ॥ ११७

यन्त्रमेतत् परं (वरं) गुह्यं अमोघं पुष्टिवर्धनम् ।
तुष्टिदं जन्मवन्ध्यानां सहसा पुत्रसिद्धये ॥ ११८

दशाहं नित्यमाराध्य द्विसन्ध्यं साध्यसंयुतम् ।
सहस्रं मन्त्र्य हुत्वा वा वन्ध्ययेत्पुत्रसिद्धये ॥ ११९

मायां कामं हुताशं शशिरविसहितं वृत्तमध्ये षडश्रे
पद्मां वायुं सरत्नं दशदलविवरे *काममायाम्बिकार्णम् ।
बाह्ये तारेशपत्रे, मनुमिनसहितं भूगृहे साध्यतारं (कामं)
यन्त्रं दिव्यं समस्तग्रहदुरितहरं काकवन्ध्या हि तार्क्ष्यम् ॥

---

* कामसूर्याम्बिकार्णम् ।

सीसेऽयसि हिरण्ये वा यन्त्रमालिख्य मन्त्रवित् ।
द्वादशाहं समाराध्य सर्वाङ्गमभिमन्त्र्य च । १२१

अभिषिच्योचितैर्हुत्वा सम्पाताज्यभिमर्शनम् ।
कृत्वाऽष्टोत्तरसाहस्रं प्राशयित्वाऽनुवासरम् ।।
बन्धयेन्मन्त्रविद्रक्षां काकवन्ध्यासुताप्तये ।। १२२

युगविन्दौ रविवारुणौ पुरषट्के शशिपाकौ
वसुपत्रे स्मरमारुतौ रविपत्रे वसुधाम्बरे ।
कमलाश्रे(ब्जे) वरशूलिनीं स्मरनीलाकमलावृतं
कलितं सत्सुतदायकं मृतवन्ध्यादुरितापहम् ।। १२३

पञ्चलोहे त्रिलोहे वा ताम्रे सीसेऽथवायसि(से) ।
आलिख्य यन्त्रमाराध्य शूलिनीमिष्टदायिनीम् ।। १२४

षोड़शाहं दिनं मन्त्र्य सहसा(सहस्रं)मायया सह ।
तैलाभिषेकहोमाज्यभस्माख्यैः पञ्चकर्मभिः ।। १२५

शुद्धायां बन्धयेद्रक्षां सहसा पुत्रसिद्धये ।। १२६

शोचिष्केशगृहेऽम्बिकोदरमरुत्षट्कोणमारोदरे
सर्पाश्रे गगनोदरे वसुदले सर्वंसहार्णोदरे ।
भूकोणे वरुणोदरे दिशिबहिर्नाम्नाऽष्टधा मारुतं
शूलिन्यङ्कितयन्त्रमेतदचिरात् गर्भादिकोच्चाटनम् ।। १२७

त्रिलोहे यन्त्रमाराध्य षोडशाहं सहस्रकम् ।
त्रिसाध्यैः प्रत्यहं जप्त्वा वायव्यां दिशि मन्त्रवित् ।। १२८

कालरात्रौ खनेत् पश्चात् अदृश्यं गर्भमुद्वसेत् ।
गर्भस्योद्वासनं द्रष्टुं ब्रह्मणापि न शक्यते ।। १२९

तस्मादिदं सुगोप्यं स्यात् कुर्याद् दृढहृदा बलिम् ।
दैवयोगात् गतं गर्भं पुनरायाति न क्वचित् ॥ १३०

अन्तर्हितस्य गर्भस्य पुनरागमनं न हि ।
तस्मात् कृतापराधायां कुर्यान्नान्यत्र मन्त्रवित् ॥ १३१

मध्ये निग्रहवान्तं अग्निभवने मायां चतुष्पत्रके
सर्पक्षार्णचतुष्टयं वसुदले वातान्विताँ शूलिनीम् ।
भूमौ सर्पचतुर्लिपिस्मरवृतं साध्यार्णसूर्यावृतं
सर्पप्रेरणयन्त्रमेतदहितप्राणापहारोज्ज्वलम् ॥ १३२

साध्यवृक्षसमिद्भूस्मन्येतदालिख्य यन्त्रकम् ।
सर्पकोटिशतावीतसभामध्यनिवासिनीम् ॥ १३३

करालदंष्ट्रवदनां [1]कालाग्निसदृशप्रभाम् ।
नानाभुजङ्गरूपेण संहरन्तीमरात्यसून् । १३४

ध्यात्वात्रावाह्य मन्त्रात्मा शूलिनीमिष्टपालिनीम् ।
आराध्य परया भक्त्या दर्शमारभ्य मासकम् ॥ १३५

अष्टोत्तराख्यसाहस्रं नित्यं साध्यत्रयान्वितम् ।
दक्षिणाभिमुखो जप्त्वा निशि दर्शेऽरिदिङ्मुखः ॥ १३६

को(गो)ष्ठे परेतभूमौ वा वैरिगेहे चतुष्पथे ।
पीडने तु तथा योज्य बलिपूर्वं खनेज्जपन् ॥ १३७

ततः स्नात्वा जपेन्मन्त्रं पक्षं नाशाय वैरिणाम् ।
अभ्येति बलवान्[2] योऽपि मृतिं सर्पादहेतुकम् ॥ १३८

---

1. कालानलशतोपमाम् ।
2. बलगुप्तोऽपि मृतिं सर्पादहेतुकीम् इति M. S. *12166*

तस्मादेतत्परं कर्म कृतागसि नियोजयेत् ।
संयान्ति मासमात्रेण वैरिसम्बन्धिनो मृतिम् ॥ १३९

मण्डलादेव नश्यन्ति वैरिणां गृहसंस्थिताः ।
द्विमासात् ग्रामसंस्थानां देशस्थानां तु वत्सरात् ॥ १४०

अथवार्जुनवृक्षस्य समिद्भिर्व्योषगोघृतैः * ।
चतुर्भिर्ब्राह्मणैः कुर्यात् पक्षहोमं यमाननः ॥ १४१

अरातयो विनश्यन्ति बलवद् रक्षिता अपि ।
दिवा कालं मुदोपोष्य धर्मं कृत्वाऽऽश्रमोचितम् । १४२

जप्त्वा प्रदोषे पूर्वोक्तसङ्ख्यं पश्चाद्हुनेद् द्विजैः ।
शान्त्यै यन्त्रं समुद्धृत्य क्षीरे निक्षिप्य मन्त्रवित् ॥ १४३

अष्टरात्रं (अष्टोत्तरं) जपेद् ब्राह्मे सहस्रमनुवासरम् ॥ १४४

मध्ये दुर्जन्तुनाम प्रतिभटसुलिपिं निग्रहाजाभिवीतं
षट्कोणे बीजभेदं स्मरहरसहितं भूपुटे मूलमन्त्रम् ।
कोणाग्रे शूलसाध्यं क्षमुखलिपिवृतं स्वेष्टदुर्जन्तुदंशात्
शत्रूणां क्षिप्रवंशक्षयकरमतुलं शूलिनीघोरयन्त्रम् ॥ १४५

यन्त्रमेतत्समालिख्य विषवृक्षे सलक्षणम् ।
आवाह्य दर्शदिवसे मन्त्री साध्यत्रयान्वितम् ॥ १४६

निशि सम्पूज्य साहस्रं जप्त्वा पूर्णान्तमन्वहम् ।
रिपुक्षेत्रेऽथवा कोष्टे खनित्वा तद्दिगाननः ॥ १४७

---

* **व्योष** - An aggregate of three spices (Black and long pepper and dry ginger) சுக்கு, மிளகு, திப்பிலி.

पुनर्जपेत्त्र्यहं वैरिनाशाय स्वेष्टदंशनात् ।
यज्जन्तुनाम लिखितं तद्दंशादेव वैरिण: ॥ १४८

नश्यन्त्यव्याजमचिरात् शूलिन्या(नी)देवताज्ञया ।
निवृत्त्यै पूर्ववन्मन्त्री क्षीरे निक्षिप्य वै जपेत् ॥ १४९

नो चेदरातिसम्बद्धान् नाशयत्येव शूलिनी ।
तस्मात्सर्वप्रयत्नेन नाशयित्वारिमात्रकम् ॥ १५०

निवारयेतु तद्वंशरक्षार्थं पुण्यवृद्धये । १५१

वैर्यर्णं व्याळमध्ये निगमदलपुटे व्योममायाग्निवायून्
षट्पत्रेष्वङ्गषट्कं दशदलदहनं शूलिनीं षोडशारे ।
साध्यक्ष्माळादिवीतं जगति बहुविधं व्याजकृत्येष्वभीष्ट-
व्याजेनारातिकायक्षयकरमखिलद्वेषिगर्वापहं च ॥ १५२

सीसपत्रे(ट्टे) समालिख्य शूलिनीं व्याजरूपिणीम् ।
रात्रावावाह्य सम्पूज्य द्वादशाहं सहस्रकम् ।
नित्यं जप्त्वाऽरिदिग्वक्त्र: खनित्वा बलिपूर्वकम् । १५३

पुनस्तथा जपेन्मन्त्रं स्वेष्टव्याजेन वैरिणाम् ।
नाशाय सुस्थिरस्वान्तः साधयेदिष्टकर्मवित् ॥ १५४

* मायागर्भस्थसाध्याक्षरहृदि परितो मारुतं हव्यवाहं
नागाश्रे रुद्रवर्णं शशिदलकमले शूलिनीं भूमिकोणे ।

---

* मायागर्भस्थसाध्यमिति – प्रथमं अष्टदलं पद्मं विलिख्य, तन्मध्ये साध्यनाम विलिख्य, तन्मध्ये वायुबीजं महीबीजं च विलिख्य, मायाबीजस्य परित: वायुबीजं वह्निबीजं च विलिख्य, पुनरष्टदलेषु

कालार्णं साध्यमायाखिललिपिविवृतं विश्ववैर्यङ्गनानां
गर्भक्षीणप्रदं तद्दुरितकरमिदं गर्भसंक्षोभणं च ॥ १५५

*कुमारपट्टे (सौकुमारे च) तद्यन्त्रं समालिख्य सलक्षणम् ।
आवाह्य कृष्णपञ्चम्यां पूर्वरात्रे मरुन्मुखः ॥ १५६

आराध्य साध्यसंयुक्तं जप्त्वा दशशतं सुधीः ।
नित्यमेवं क्रमेणैवापररात्रौ तु दर्शके ॥ १५७

तत्क्षितौ कोष्ठयुग्मे वा सीमान्ते वा यथोचितम् ।
खनित्वा बलिपूर्वं तु जपेद् भूयश्चतुर्दिनम् ॥ १५८

नानाविधारियोषाणां गर्भं तत्तच्छनैः (अत्यद्भुतं) शनैः ।
क्षयं याति स्वयं कृष्णपक्षचन्द्रकला इव ॥ १५९

षट्कोणान्तस्त्रिकोणप्रणवहृदि रिपोर्नाम बाह्यान्तरस्थां
शक्तिं बह्निस्थवह्नौ मरुदृतुविवरे शूलिनीमष्टपत्रे ।
भूमौ भूमिस्थतोयं गगनपरिवृतं बाह्यमायाखिलार्णं
यन्त्रं विश्वारिसैन्यक्षयकरमखिलप्राणतूलाद्य(न्त्य) वह्निः ॥

यन्त्रमेतन्महावीर्यं अमोघं वैरिनाशनम् ॥
आलिख्यायसि सम्पूज्य पूर्णमादित्यमण्डलम् ॥ १६१

---

श्रीं ह्रीं रुं रुद्राय नमः इति रुद्रमन्त्रं विलिख्य, पुनः षोडशदलं पद्मं विलिख्य, तेषु प्रणवपूर्वक शूलिनीमन्त्रवर्णान् विलिख्य, तद्बहिरष्टकोणं विलिख्य, तेषु कालवर्णाख्यं मकारं विलिख्य, तद्बहिः साध्येन मायया पञ्चाशद्वर्णैश्च क्रमेण वेष्टयेत् ॥

* सौकुमारपटे यन्त्रं – इति मा० *12166*
सौकुमारेति पित्तळे ॥

अष्टभिर्मन्त्रिभिर्नित्यं अष्टयन्त्रं सहस्रकम् ।
अष्टमूर्त्यर्णसंयुक्तं मूलेनैव त्रिसाध्ययुक् ॥ १६२

पुरन्दरजलेशाग्निमरुद्याम्यासुरेन्दुषु ।
ऐशान्ये च क्रमाद्यन्त्रं खनित्वा दिक्षु मध्यके ॥ १६३

पृथ्व्यप्तेजोमरुद्व्योमसोमसूर्यात्मना तथा ।
मध्ये समष्टिनाम्ना तु स्वयं मन्त्रितयन्त्रकम् ॥ १६४

क्वचिद्रम्यस्थले तत्तन्नाम्ना तु नवकुण्डके ।
तर्पयित्वा पञ्चदिनं समीकृत्य सलक्षणम् ॥ १६५

कृत्वा तु निग्रहं कुण्डं होमं तन्त्रोक्तवर्त्मना ।
प्रकुर्यान्निग्रहद्रव्यैर्जन्मादिनवभिर्द्रुमैः ॥ १६६

चत्वारिंशद्दिनं मन्त्री दक्षिणाभिमुखः स्वयम् ।
सहसा वैरिसैन्यस्य क्षयं भवति निश्चयः (म्) ॥ १६७

अतिप्रौढारिसैन्यानां द्विगुणं त्रिगुणं तु वा ।
अनेनारिकुलं जित्वा साधकेन्द्रः सुखी भवेत् ॥ १६८

शान्त्यै यन्त्राणि चोद्धृत्य क्षीरे निक्षिप्य मन्त्रवित् ।
दशाहं पायसाज्याभ्यां जुहुयाच्छुभकुण्डके ॥ १६९

पञ्चाश्रान्तःस्थबिन्दौ रिपुलिपिमभितोऽभ्यन्तरे च स्मराब्जे*
कोणे ब्रह्मादिवर्णं ऋतुगृहविवरे काममायाङ्गषट्कम् ।
वस्वब्जे मूलमन्त्रं क्षितिभुवनपुटे काममायाष्टवर्णं
स्वेच्छास्वप्नप्रदं तत् त्रिभुवनभयदं मोहनं शूलिनीयम् ॥

---

* स्मराजे

भस्मन्येतत्समालिख्य शूलिनीं स्वप्नमोहिनीम् ।
आवाह्य रजनीपत्रे पूज्य सर्वोपचारकैः ॥ १७१

त्रिसाध्यैस्तत्समं जप्त्वा धारयेद्भस्म वाऽऽवहेत् ।
खनेद्वा कुत्रचिद्देशे साध्यदिग्वदनः स्वयम् ॥ १७२

स्वेच्छास्वप्नस्वरूपेण स्वप्नसम्मोहशूलिनी ।
त्रिलोकं मोहयत्येव साधकाभीष्टसिद्धये ॥ १७३

यादृग्रूपं स्मृतं साध्यं सर्वेषामपि सुस्थिरम् ।
तादृग्विधं भवेत्स्वप्नं सर्वसिध्येकहेतुकम् ॥ १७४

समष्टिसाध्यरूपेण मन्त्रितं भस्मपुट्टलम् ।
घटिकादिनमासाब्दैः कृतसङ्केतक्लृप्तिकम् ॥ १७५

निखनेद्यत्र तत्स्थानप्रतिमां व्याज़तः स्वयम् ।
सर्वाभीष्टप्रदा भूयात् स्वप्नसम्मोहशूलिनी ॥ १७६

अत्युत्तममिदं तस्मात् अमोघं विश्वमोहनम् ।
साधयेत्सर्वथा मन्त्री निग्रहानुग्रहाय वै ॥ १७७

अभीष्टकार्यसिध्यर्थमागतानां द्विजन्मनाम् ।
स्वप्ने तत्तत्फलं लब्ध्वा प्रत्यक्षं फलमश्नुयात् ॥ १७८

शमनं सर्वरोगाणां क्षुद्रभूतग्रहादिनाम्(?) ।
शान्तिदं सर्वदुष्टानां नाशनं सिद्धिदं नृणाम् ॥ १७९

त्रैलोक्यारातिरूपं विविधमवयवं सीसपट्टे लिखित्वा
तत्केशाद्यङ्गवर्णं वहिरपि हृदये काममायानिलार्णम् ।

भूम्याद्याव्योमवर्णं *लिपिभिरपि वृतं साध्यमायाग्निवाह्यं
मूलं विश्वावकाशे रिपुमदहरणं विश्वरूपाभिधानम् ॥

अस्मिन् वैरिणमावाह्य सराष्ट्रपरिवारकम् ।
त्रितार्यां द्विस्वरूपेण शत्रुसम्मोहशूलिनीम् ॥ १८१

सराष्ट्रसैन्यकर्मारि यथापूर्वमतःपरम् ।
आवाह्य मूलविद्याभ्यां अयुतं सावधानतः ॥ १८२

खनित्वा भुवि रम्ये तु बलिपूर्वं निशामुखे ।
तत्र सम्मोहनं कुण्डं कृत्वा मन्त्री सलक्षणम् ॥ १८३

आपदुद्धारणं कार्तवीर्यं मृत्युञ्जयं तथा ।
जातवेदाग्निदुर्गां च रक्षाघ्नं च सुदर्शनम् ॥ १८४

नामत्रयमहाविद्यां मन्युं चैवाभयङ्करम् ।
पञ्चाष्टार्णं च पृथिवीभूताद्यष्टमहामनुम् १८५

पृथक् त्रिधैतत्सकलं वितन्वन्
द्विजेषु मन्त्री दृढसाधकेषु ।
क्रमात्समावाह्य यथाविधानं
आराध्य तद्वत् प्रजपेत्तु वृत्वा ॥ १८६

ततो हुनेत्पायसगोघृताभ्यां
अनन्यधीर्मन्त्रविदां वरिष्ठः ।

---

* विलिपिपरिवृतम् ।

तत्साममन्त्रेन धृतेन शेषं
अरातिमोहाय जयाय लक्ष्म्यै ॥ १८७

होमेनानेन सन्तुष्टा शूलिनी विश्वरूपिणी ।
मोहयित्वा सराष्टारिं ददात्याशु जयं प्रभोः ॥ १८८

अनया विश्वमोहिन्या मोहिताः सानुगारयः ।
पराजिताः परी(वशी)भूताः पादाक्रान्ताः भवन्ति हि ॥ १८९

यन्त्रेऽस्मिन् विश्वरूपे निखिललिपिवहिः मध्यवैश्वानरार्णं
मूलं विश्वावकाशे पवननिबिडितं बाह्यसाध्यान्तकार्णम् ।
मायावीतं समस्तप्रतिभटपृथिवीपालतूलान्त्यवह्निं
दिव्यं श्रीशूलिनीयं सकलविजयदं साधकेष्टार्थदं च ॥

एतत्ताम्रे समालिख्य कृत्वा सर्वं यथापुरा ।
अर्कस्नुहिपयोलिप्तैः(युक्तैः) त्रिधाऽऽलिप्याष्टचूर्णकैः ॥ १९१

खनित्वा पूर्ववन्मन्त्री कृत्वा संहारकुण्डकम् ।
आपदुद्धारमन्त्रादिजपं कृत्वा यथापुरा ॥ १९२

रिपोर्वधविपज्जन्मप्रत्यरर्क्षगशायिभिः ।
सगोधृताष्टचूर्णैश्च जुहुयान्निश्यवाङ्मुखः ॥ १९३

त्रिमासादेव नश्यन्ति वलवन्तोऽपि वैरिणः ।
रिपोर्गजाश्वपत्तीनां भवेदव्याजनाशनम् ॥ १९४

सचभ्वो वैरिणस्तेन पञ्चत्वं प्राप्नुयुर्ध्रुवम् ।
अनिवार्यमिदं कृत्यमशेषैरमरैरपि ॥ १९५

सावधानेन वै तस्मात् साधयेत्साधकोत्तमः ।
कर्तुश्चित्तस्य सङ्कोचात् ऋत्विजः साधकस्य वा ॥ १९६

तस्मिन् पतति तद्दोषाद्देवताज्ञाऽतिदुःसहा ।
एतद्यन्त्रेषु सर्वेषु प्रयोगेषु प्रयोगवित् ॥ १९७

आलिख्य पूर्ववत् सर्वं सर्वार्णान्तर्बहिश्च तु ।
प्रत्येकमातृकार्णानां यदुक्तं फलमञ्जसा ॥ १९८

तत्तत्सिद्ध्यै तत्तदर्णं लिखेन्मामाक्षरान्वितम् ।
आवाहने मन्त्रसाध्ये तत्तदिष्टं विचिन्तयेत् ॥ १९९

तत्तत्कृत्योचितैर्द्रव्यैर्जुहुयात् प्रोक्तवर्त्मना ।
तथा तथाऽखिलं कृत्यं सफलं भवति ध्रुवम् ॥ २००

तस्मात्सर्वाणि कर्माणि सावधानेन चेतसा ।
साधयेत् विश्वरूपेण तन्त्रेण कृतिनां वरः ॥ २०१

दृढावाहजपध्यानतर्पणैः दृढहोमकैः ।
जपात् दृढतरां सिद्धिं लभेन्मन्त्रविदां वरः ॥ २०२

निग्रहेऽनुग्रहे देवीं शूलिनीं विश्वरूपिणीम् ।
पञ्चाशन्निष्कसौवर्णं प्रतिमां दिव्यलक्षणाम् ॥ २०३

तत्तद्ध्यानप्रकारेण कृत्वाऽऽवाह्य तु शूलिनीम् ।
उपचा(हा)रैस्तु सम्पूज्य दत्वा मन्त्रविदे कृती ॥ २०४

ततस्त्वावाह्य तां तस्यां शूलिनीं विश्वरूपिणीम् ।
आफलं पूजयेन्मन्त्री सर्वकर्माणि साधयेत् ॥ २०५

विश्वकर्मप्रयोक्ता यः स भवेत् सर्वकर्मकृत्(वित्) ।
तस्मादिदं विश्वरूपं साक्षाद्दैविकमुत्तमम् ॥ २०६

अमोघं परमं श्रेष्ठं अतिगुह्यमभीष्टदम् ।
सर्वतः साधकेन्द्राणामयत्नविजयप्रदम् ॥ २०७

नानाविधनिजोपायैरधः कृत्वाखिलान् रिपून् ।
सर्वोत्तमपदं प्राप्य सुखी भवति साधकः ॥ २०८

बिन्दौ शीतगुकोणके मणिमुखं मूलं सकामाम्बुजे(जं)
सन्धिष्विन्दुजलेशमानिललिपिः साध्यं त्रिशूलोदरे ।
भूमौ व्योममहीजलानलमरुद्वर्णं वह्निर्मातृकां
मायावीतमिदं कुतूहलकरं त्रैलोक्यसम्मोहनम् ॥ २०९

एतत्सुवर्णपत्रे(षु) तु शिरस्त्रादिषु वस्तुषु ।
आलिख्यावाह्य सम्पूज्य याद्यैस्त्रैलोक्यमोहनम् ॥ २१०

सम्मन्त्र्य मण्डलं मन्त्री नित्यं तत्सामसङ्ख्यकम् ।
गम्भीरहर्षयात्रासु सभाकेलिषु मन्त्रवित् ॥ २११

निर्वहेद्धारयेद्वापि विश्वसम्मोहनाय वै ।
अथवा चित्रलीलासु लोकचित्तभ्रमाय वै ॥ २१२

एवं कर्मसु सर्वेषु साधयेत्सर्वसिद्धये ॥ २१३

मध्ये बीजं सचन्द्रं वसुदलविवरे पाशिमन्त्रं स्वराश्रे
मूलं भूकोणयुग्मे सहकलितमथो ह्रीं(स्त्रीं)मजापूर्णबाह्यम् ।
यन्त्रं श्रीशूलिनीयं ज्वरगरलमुखाशेषसन्तापनाशं
स्वेच्छालीलाभिवृष्टिप्रदमिदमतुलं स्वेष्टविद्रावं(दं)णं च ॥

घृणिपरीतहुताशनबीजं
भूगृहान्तरपञ्चनिशेशम् ।
लिपिपरीतमिभाशुग(भोरग)मन्त्रं
भुजगकालवनाशनिपातम् ॥ २१५

*मध्येनाम समेमिभाश्रविवरे कन्दर्पबीजाष्टकं
शूलिन्याष्टदले रमां क्षितिपुटे मायां च चिन्तामणिम् ।
पञ्चाशल्लिपिभिः श्रिया परिवृतं यन्त्रं जगन्मोहनं
कन्यावृद्धिकरं कुचोद्भवकरं सौभाग्यभोगप्रदम् ॥ २१६

मध्ये रत्नं सकामं भृगुभृगुयुगलं मूलमन्त्रं द्विवारं
माया(यां)सन्धौ शशाङ्कं दशदलवरुणं पञ्चमर्मस्विनाब्जे ।
मायापूर्णाभिधानैरभिवृतमतुलं विश्ववन्ध्याङ्गनानां
सत्सन्तानाभिवृद्धिप्रदमघहरणं शूलिनीयन्त्रमेतत् ॥ २१७

भानुद्वन्द्वत्रिकोणे स्मरविशिखफलैस्तत्क्रमादस्त्रमन्त्रम्
मध्ये वेदक्षमाश्रे मणियुगयुगलं शूलिनीं षोडशारे ।
भूमौ लक्ष्मीं ससाध्यं शशितपनबहिः संवृताशेषवर्णं
यन्त्रं नानावधूनां ऋजुतनयकरं राजसाघौघवज्रम् ॥ २१८

शिखिभृगुगृहमूलं मध्यसन्तानसाध्यं
प्रतिगृहमणिकामौ सर्वसन्धौ क(क्ष)मान्तम् (ख्याम्) ।

---

* मध्ये नामसमेति – प्रथमं चतुरश्रद्वयं पुटितरूपेणाष्टकोणं, तन्मध्ये साध्यनाम विलिख्य, तद्बहिरष्टदलं पद्मं विलिखेत् । तेषु शूलिनीवर्णांश्च द्वन्द्वशो विलिख्य, तद्बहिश्चतुरश्रद्वयं पुटित्वा विलिख्य, तस्याष्टकोणेषु लक्ष्मीमायाचिन्तामणिबीजानि विलिख्य, तद्बहिर्वृत्तं मातृकया वेष्टयेत् । तद्बहिः श्रीबीजेन च वेष्टयेत् ।

गलशिखदलशूलेष्वर्कसाध्याम्बिकार्ण
धृतमृतसुतबन्ध्यागर्भदं यन्त्रमेतत् ॥ २१९

विन्दौ रत्नं सबीजं ऋतुगृहविवरे सेन्दुशक्त्यङ्गषट्कं
वस्वश्रेष्वष्टवर्ह्नि स्वरदलकमले शूलिनीमन्त्रवर्णम् ।
यष्ट्वा स्वप्नेन मन्त्रं फलदलकमले साध्यमायाभिवीतं
यन्त्रं दुःस्वप्नवन्ध्यातनयदमतुलं सर्वदुष्टाहिताक्ष्यम् ॥

ऊर्ध्वंतिर्यक् ऋगश्रं प्रतिगृहमनलं शूलिनीमूलमन्त्रं
"यस्त्वाभ्रात्रे"त्यृचं वै प्रतिभवनयुगं वर्णमग्राग्रशूलम् ।
बाह्ये साध्यं स्मरार्णैः अभिवृतमतुलं सर्वसन्धौ कमान्तं
यन्त्रं दुःस्वप्नभोगग्रहदुरितहरं पुत्रदं सद्वधूनाम् ॥ २२१

*ऐं(यें)कारं वृत्तमध्ये निगमसमदले दम्पतीशेति चाग्रात्
वृत्ताद्बाह्ये दशारे स्मरमणिसहितं "यस्त ऊर्वादि"रान्तम् ।
योनिं यो अन्तरोरेत्यमृनकरदले शूलिनीयुक्तबाह्ये
साध्यं नानावधूनां तनयदमतुलं स्तब्धभोगार्तिवज्रम् ॥

**॥ इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण विरचिते दुर्गाक्रियाविधाने दिव्यशासनं नाम चतुर्थ उपदेशः ॥**

---

* ऐंकारं वृत्तमध्ये इति — प्रथमं चतुर्दलं पद्मं विलिख्य तत्कर्णिकायां ऐंकारं विलिख्य चतुर्दले दम्पतीशेति चतुर्वर्णं विलिख्य, तद्बहिः दशदलं पद्मं विलिख्य, तेषु कामबीजं चिन्तामणिबीजं चान्तरन्तर्विलिख्य, तेषु यस्त ऊरौ विहरत्यन्तरेति दशार्णं विलिख्य तद्बहिः षोडशदलं पद्मं विलिख्य तेषु प्रणवपूर्वकं - शूलिनीमन्त्रवर्णांश्च विलिख्य योनिं यो "अन्तरारेर्गमिते नाशयामसि" इति षोडशवर्णांश्च विलिख्य तद्बाह्ये साध्यवर्णेन वेष्टयेत् ।

**श्रीदेव्युवाच –**

सर्वज्ञ भगवन् शम्भो सर्वतन्त्रैकबोधक ।
वद मे शूलिनीदेव्या:क्रियोत्कर्षरहस्यकम् ।। १

**श्रीशिव उवाच –**

शृणु देवि प्रवक्ष्यामि यदुक्तमधुना त्वया ।
तदवाच्यमशेषाणां अनर्हाणां विशेषतः ।। २

गुह्याद् गुह्यतरं दिव्यं गोपनीयं प्रयत्नतः ।
गोपनात्सर्वसिद्धिःस्यात् आचार्यवचनं यथा ।। ३

नानायन्त्रेषु दिव्येषु या सिद्धिरुपपद्यते ।
सा सिद्धिरचिरात् एव (अत्र) भवेदस्मान्न संशयः ।। ४

क्रियोत्कर्षमहायन्त्रे सर्वयन्त्रमये शुभे ।
सम्यगाराधिता देवी सद्यःसिद्धिप्रदा भवेत् ।। ५

अस्मिन् यन्त्रे क्रियोत्कर्षे विश्वसिद्धिप्रदे परे ।
लेखनीयाक्षरभिदा क्रियाभेदफलप्रदे ।। ६

तत्तत्क्रियोचितं मन्त्रं तत्र तत्रोच्यते तथा ।
तासां सर्वक्रियाख्यानां नित्यस्थानं तु तत्समम् ।। ७

तत्साममातृकार्णस्य सङ्ख्याकस्य विशेषतः ।
सारात् सारतरं वेदसङ्ख्यं मन्त्रसमुद्धृतम् ।। ८

वेदसङ्ख्याकतत्साममातृकार्णस्य भेदतः ।
तत्समस्थानमेकत्र क्रियोत्कर्षं तदीरितम् (?) ।। ९

तस्मादेतत्क्रियोत्कर्षयन्त्रं सर्वार्थसिद्धिदम् ।
साधयेत्सर्वसिध्यर्थं साधयेत्साधकोत्तमः ।। १०

आलिख्याष्टाष्टकोष्ठप्रतिगृहसुषिरं कीलपक्षं च साध्यात्
प्रादक्षिण्येन पाङ्क्तं विहितरसरसस्वारतत्सामवर्णम् ।
मध्ये रत्नं तु बीजं प्रणवपरिवृतं पञ्चधा मूलमन्त्रं
सन्धौ शूलाग्रसाध्यं विहितपरिवृतं सत्क्रियोत्कर्षकं तत् ॥

यन्त्रमाराध्य(लिख्य) कनके शूलिनीं सर्वसिद्धिदाम् ॥ १२

साधयेत्तत्तदिष्टार्थं सिध्यै साधकपुङ्गवः ।
वेदसङ्ख्यं ... ... एतदालिख्य यन्त्रकम् ।
तत्तन्नाम्ना समावाह्य शूलिनीं मन्त्रवित्तमः ॥ १३

सर्वावरणसंयुक्तां सममाराध्य सन्निधौ ।
तन्मयः प्रजपेन्नक्तं मन्त्रार्णशतसङ्ख्यकम् ॥ १४

तत्तत्सिद्धिमवाप्नोति साधकः स्थिरमानसः ।
अकारादिक्षकारान्ततालवर्णस्वरक्रमात् ॥ १५

तत्सामवर्णयोगार्णैः वेदसङ्ख्यं भवेत्क्रमात् ।
तत्र षोडषवर्णस्य सर्वत्र न विकल्पना ॥ १६

इतरेषां विकल्पं(:) स्यात् *क्यादिक्म्यान्ताक्षरावधि ? ।
नानाक्रियाणामेतत्स्यात् सिध्यै यन्त्रावृतं मनुम् ॥ १७

क्रमादिहोच्यते सूक्ष्मं मन्त्रिणां सिद्धिमिच्छताम् ।
आलिख्य मातृकां शुद्धां यन्त्रेऽस्मिन् भाग्यवृद्धिदे ॥ १८

---

* कादिमान्ताक्षरावधि इति पाठः साधीयान् भवेत् ॥

मध्यसन्ध्युपले लक्ष्मीं "श्रियेजात" ऋचावृते ।
सौभाग्यशूलिनीं देवीमावाह्याराध्य साधकः ॥ १९

प्रणम्य सन्निधौ तिष्ठन् आसीनो वाऽव्रहिर्मनाः ।
कल्याणविग्रहो मौनी काम्यपल्लवसंयुताम् ॥ २०

सहस्रं प्रजपेद् विद्वान् नित्यानन्दमयः स्वयम् ।
मण्डलादिष्टकाम्यार्थं लभेन्मन्त्री न संशयः ॥ २१

अथवा पद्मया युक्तां मूलविद्यां यथा पुरा ।
आमण्डलं जपेद् विद्वान् स्वेष्टभाग्याभिवृद्धये ॥ २२

अथवाभ्यां तु मन्त्राभ्यां लक्ष्मीपुष्पं सगोघृतम् ।
भाग्यकुण्डानले पक्षं जुहुयाच्छतमन्वहम् ॥ २३

भाग्याधिको भवेन्मन्त्री शूलिनीकृपया जवात् ।
मूलविद्यां रमां वापि द्वयं वैकं यथा पुरा ॥ २४

देवताराधनान्ते तु नित्यं *सन्ध्याचतुष्टये ।
जपेदतन्द्रितो मन्त्रं सर्वभाग्याभिवृद्धये ॥ २५

प्रातर्मध्याह्नसायाह्नक्षपामध्याश्चतुःस्मृताः ।
शुद्धामुषसि बिन्द्वन्तां मध्याह्ने सर्गसंयुताम् ॥ २६

सायाह्ने मध्यरात्रे तु विन्दुसर्गार्णमातृकाम् ।
सवायुमातृकामस्मिन्नालिख्योक्तस्थलेषु तु ॥ २७

---

* सन्ध्याचतुष्टये — प्रातःसन्ध्या – मध्याह्नसन्ध्या – सायंसन्ध्या – अर्धरात्रे तुरीयसन्ध्येति सन्ध्याचतुष्टये ॥

तथा रत्नान्तराक्तानामाद्यर्णं वायुसंयुतम् ।
"असुनीते पुन"रिति ऋचा संवेष्ट्य मन्त्रवित् ॥ २८

आवाह्य शूलिनीं देवीं क्षीणप्राणविवर्धनीम् ।
सर्वोपचारैराराध्य मासं प्रतिदिनं तथा ॥ २९

सहस्रं प्रजपेद्देवीं सावधानेन चेतसा ।
नानाविधमहापापैः क्षीणप्राणोऽपि मानवः ॥ ३०

पूर्णायुष्यमवाप्नोति शूलिन्यास्तु प्रसादतः ।
क्षीणायुर्यो महारोगैः प्रयोगैरनिवारितैः ॥ ३१

आयुर्वृद्ध्यै सुखावाप्त्यै तत्तद्रोगनिवृत्तये ।
आराध्य शूलिनीमस्मिन् चतुःसन्ध्यासु वै सुधीः ॥ ३२

द्विशताधिकपञ्चाशत् – सङ्ख्यमापक्षमन्वहम् ।
अभिमन्त्र्य प्रयुञ्जीत तत्तच्छान्तिकमौषधम् ॥ ३३

तरसा शूलिनीमन्त्ररश्मिवृद्धिप्रभावतः ।
मुच्यते सहसा(स महारोगात्)रोगात् तुषारादिव भास्करः ॥

मातृकां पावकोपेतां आलिख्यास्मिन् यथापुरा ।
द्रंकारमुपलार्णान्तर"सुनीते पुना" ऋचा ॥ ३५

संवेष्ट्यावाह्य तां देवीं ग्रहक्षुद्रार्तिजीवनीम् ।
आराध्य परया भक्त्या पञ्चविंशद्दिनं दिनम् ॥ ३६

सहस्रं प्रजपन्मन्त्रं सावधानेन चेतसा ।
दुर्ग्रहैर्विविधैः क्षुद्रैः नानादुर्जन्तुदंशकैः ॥ ३७

बलेन निगृहीतायुश्चिरं जीवति मानवः ।
तथा मन्त्र्य चतुःसन्ध्यं भस्म युञ्जीत केशतः ॥ ३८

पृथक् द्विसन्ध्यं नवकुम्भतोयं
मूलेन सम्मन्त्र्य सहस्रसङ्ख्यम् ।
आर्तं नरं भाव्य मलीमसाङ्गं
सिद्धाभिषेकैरमलं प्रयुञ्ज्यात् ॥ ३९

क्षुद्रभूतविषात् क्षीणप्राणकायादिकस्य च ।
पुनर्यथा सुखप्राप्तिः क्षीणज्वालेष्टयोगतः ॥ ४०

इन्द्रियाण्यमलानि स्युः पुष्टिर्भवति तत्तनौ ।
दीर्घमायुः समभ्येति शूलिनीकृपया नरः ॥ ४१

उक्तोपहतिभिः क्षीणः कलामात्रावशेषितः ।
वृद्धिमेत्यमुना प्राणस्तूलेनेव हुताशनः ॥ ४२

आखिल्य यन्त्रे पूर्वोक्ते मातृकां साग्निमारुताम् ।
मध्यसन्ध्युपले वर्णमखिलं चोचितस्थले ॥ ४३

* "पुनर्नो असुं पृथिवी ददात्वि"ति ऋचावृतम् ।
मृतसञ्जीवनकरीं शूलिनीं जगदीश्वरीम् ॥ ४४

आवाह्य पूज्य मन्त्राभ्यां इष्टसाध्यसमन्वितः ।
सहस्रं प्रजपेन्नित्यं द्विमासं सावधानतः ॥ ४५

ग्रहक्षुद्रास्त्रशस्त्रादिविविधोपाधिभिर्मृताः ।
शूलिन्या मृतजीविन्या पुनर्जीवन्ति जन्तवः ॥ ४६

---

* पुनर्नो असुं पृथिवी ददातु पुनर्द्यौर्देवी पुनरन्तरिक्षम् ।
पुनर्नःसोमस्तन्वं ददातु पुनःपूषा पथ्यां या स्वस्तिः ॥

मूलाऽवसाने संयोज्य ऋचं सन्ध्याचतुष्टये ।
चतुर्विधक्रमैर्मासं यो जपेत्साधकोत्तमः ।। ४७

विशेषात्तर्पणाद्यैश्च शूलिन्यात्मा यतः सुधीः ।
जीवयत्यखिलान् जन्तून् उक्तोपहृतिभिर्मृतान् ।। ४८

तस्मादत्युत्तममिदं रहस्यं मृतजीवनम् ।
(शूलिनीं प्रत्यहं पूज्य चतुःसन्ध्यं यथाविधि ।)
सिद्धये कुलहीनानां मतिमान्नैव दर्शयेत् ।। ४९

मातृकां सशुनासीरां अस्मिन् द्रं रत्नमध्यतः ।
संवृतं "यत इन्द्रे"ति शेषमालिख्य पूर्ववत् ।। ५०

आवाहविद्ययाऽऽवाह्य शूलिनीमभयङ्कराम् ।
मण्डलं प्रत्यहं पूज्य चतुःसन्ध्यासु धैर्यधृत् ।। ५१

पृथक् क्रमाच्छुद्धपूर्वा(र्वं) जपेत्तत्सामसङ्ख्यया ।
अत्यसह्यान् रिपून् हन्यात् तद्भक्तेष्वभयङ्करः ।। ५२

अथवा निग्रहद्रव्यैः आभ्यां होमं यथाविधि ।
रक्षाकरैर्वा जुहुयात् साध्यपल्लवभेदतः ।। ५३

तथा तथा भवेन्मासात् शूलिनीदेवताज्ञया ।
यन्त्रेऽस्मिन् मातृकां सेन्द्रमारुतां द्रयं महामणिम्(णौ) ।। ५४

"इन्द्रवायू इहे"होति ऋचाऽऽवेष्टयाखिलं तथा ।
आराध्य मण्डलं नित्यं चतुःसन्ध्यासु तत्समम् ।। ५५

द्विवंशस्निग्धप्रो(पो)ष्याणां वृद्धिसाध्यसमन्वितम् ।
प्रजपेत्सावधानेन मनसा मन्त्रवित्तमः ।। ५६

उपाधिभिरुपक्षीणः(णं) *साध्यैस्त्रिविश्वकर्मभिः ।
सर्वाभिवृद्धिमभ्येति पुत्रपौत्रानुगैः स्वयम् ।। ५७

अथवा लुप्तवंशानां वंशवृध्यै जपात्परम् ।
मण्डलं तर्पयेदाभ्यां नित्यं तत्सामसङ्ख्यकम् ।। ५८

पुत्रदैर्जुहुयाद्द्रव्यैर्मण्डलं वृद्धिपल्लवैः ।
मण्डलं भोजयेद्विप्रा(विद्वान्)नुक्तसङ्ख्यं स्वशक्तिभिः ।। ५९

निजवंशद्वयस्निग्धपोष्यतत्स्निग्धवर्गिणाम् ।
पुत्रपौत्रमुखाशेषशुभवृद्धिर्भविष्यति ।। ६०

मध्यसन्ध्युपले द्वार्णं मातृकां तु सवारुणम् ।
वारुणावाहमन्त्रेण संवृतं वृष्टिसाध्ययुक् (वृष्टिसिद्धिदम्) ।।

यन्त्रमेतत्समाराध्य चतुःसन्ध्यासु मन्त्रवित् ।
आवाहविद्यया मूलं जपेत्तत्समसङ्ख्यकम् ।। ६२

पक्षादेव महावृष्टिर्भविष्यति न संशयः ।
अथवा वारुणं सूक्तं जापयन्वेदसत्तमान् ।। ६३

अष्टषोडशषट्त्रिंशच्चत्वारिंशत्सपञ्चकान् ।
आगळं **स्थिरतोयस्थान् अतिगम्भीरमानसान् ।। ६४

गलूचीसोमवल्लीभ्यां जुहुयात्तत्समं दिनम् ।
मण्डलादेव तद्राज्यं वृष्ट्या पूर्णोदकं भवेत् ।। ६५

---

* असाध्यं विश्वकर्मभिः इति मा. *12166*

** प्रवहन्नदीजले जपः न कार्यः इति प्रतीयते ।

योऽन्वब्दं वर्षणे मासि वृष्टिसिध्यै जितेन्द्रियः ।
जपहोमक्रियां कुर्यात् कारयेद्वा यथाविधि ॥ ६६

अवग्रहैरनावृष्टिर्न भवेत्तस्य राज्यके ।
द्व्यंकारमुपलस्थान्तः मरुत्का(मरुक)(द्र)न्वितमातृकाम् ॥ ६७

सवारुणमरुत्प्राणावाहविद्यावृतं श्रिया ।
अस्मिन् यन्त्रे महादेवीं शूलिनीं विश्वजीवनीम् ॥ ६८

आराध्य विधिवन्मन्त्री चतुःसन्ध्यासु तत्समम् ।
प्रजपेन्मण्डलं नित्यं देशिकाङ्घ्र्यम्बुजद्वयम् ॥ ६९

सततं चिन्तये(चिन्तयन्)मूर्ध्नि शूलिनीदेवतामयः ।
तिष्ठन् मृता द्रुमा भूयः प्राणन्त्याशु फलन्ति च ॥ ७०

द्विमण्डलात्स्वदेशस्था भवन्त्योषधयस्तथा ।
बहुनोक्तेन किं सार्वकालजापी यदि स्वयम् ॥ ७१

तद्देशौषधयो वृक्षाः फलन्त्येवोत्तरोत्तरम् ।
तस्मात्सर्वफलापेक्षी सावधानेन चेतसा ॥ ७२

जापयेद्वा जपेन्मन्त्री तत्सामार्णैश्चतुर्विधैः ।
स्वाश्रमे निवसन् सर्वजीविन्यात्मातिभक्तिमान् ॥ ७३

शोभितोऽखिलकल्याणैः सुखी भवति बन्धुभिः ॥ ७४

**इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण विरचिते दुर्गाक्रियाभेदविधाने क्रियोत्कर्षं नाम द्वितीयोपदेशः ॥**

**( तृतीयोऽध्यायः ॥ )**

श्रीशिव उवाच —

नानाविवादविजयं रहस्यं देवि तत्वतः ।
कथयामि प्रपन्नानां हिताय सुखमिच्छताम् ॥ १

स्वमित्राहितशर्त्वृक्षे (त्वर्क्षे) लग्ने तादृग्विधे सुधीः ।
हिरण्ये वक्ष्यमाणानि यन्त्राण्यालिख्य लक्षणम् ॥ २

मध्यसाध्यत्रयोपेतं स्मरन्नावाह्य विद्यया ।
आवाह्य परया भक्त्या शूलिनीं शत्रुमर्दिनीम् ॥ ३

समाराध्य विशुद्धात्मा सावधानेन चेतसा ।
तथाऽष्टोत्तरसाहस्रं जप्त्वा वध्वोत्तमाङ्गके ॥ ४

सेवकं (साधकं) विसृजेन्मन्त्री विवादविजयाय वै ।
तत्तद्वारर्क्षमारभ्य ईशानादि प्रदक्षिणम् ।
प्राचीं दिशि स्वयं तिष्ठेदरातिं कुण्ठितेन्द्रियम् ॥ ५

आलोकयन् स्मरन् मूर्ध्नि निखिलारातिमर्दिनीम् ।
विवादोचितकर्माणि सावधानेन सुस्थिरः ॥ ६

आरभेद्देशिकानुज्ञां बद्ध्वा विजयसिद्धये ।
नानाविधरिपुं तूर्णं विजित्वा(?)देशिकाज्ञया ॥ ७

पूजितोऽरातिभिः सर्वैः प्रतापैरधिको भवेत् ।
अथवारिविपज्जन्मबधप्रत्यरभक्रमात् (द्रुमान्) [त्] ॥ ८

समित्सहस्रमादाय व्योपसर्षपसैन्धवैः (सैन्धवसर्षपैः) ।
गोघृतैर्जुहुयान्मन्त्री विजयाय सुखाप्तये ॥ ९

जपान्ते तु विशेषेण महादेवस्य शूलिनः ।
अभिषेकालेपपुष्पधूपदीपनिवेदनैः ॥ १०

प्रदक्षिणैस्तु शूलिन्या ब्राह्मणाराधनैस्तथा ।
प्रीतिं कृत्वा यथापूर्वं विहरेत्साधकोत्तमः ।। ११

वेदत्रिक्ष्मागृहान्तः स्मरशरभवने मूलमन्त्रं चतुर्धा
छायामर्मस्त्रजामोदरमणिमभितो रेखशूलाग्रसाध्यम् ।
मायाताराभिवीतं निखिललिपिवृतं खड्गखेटार्थवाद-
प्रौढश्रीसिद्धिदं तद्रिपुपतनकरं शूलिनीसामयन्त्रम् ।। १२

ऊध्वं तिर्यक्चतुष्कक्षितिगृहविलसद्भूगृहे मूलवर्णं
जेतुं नामार्णपूर्वं षषगृहविवरे तत्क्षवर्णैश्चतुर्भिः ।
मर्मास्त्रैकैकवर्णं ततशिवविशिखेष्वङ्कितंपाशपूर्णं
कुन्तास्त्रप्रौढवातप्रतिभटविजयं शूलिनीतैजसं तत् ।। १३

ऊध्वंतिर्यक्त्रिपृथ्वीगृहगृहविलसद्भूसमरार्णा(स्त्रा)वकाशं
मूलं शुद्धं त्रिवारं वरशिवविशिखेष्वङ्कितं तारवीतम् ।
राकामर्मस्वजान्तर्मृगहृदि मदनं व्याघ्रवाराहहस्ति-
श्वाजाद्यन्योन्ययुद्धप्रतिमृगविजयं शूलिनीभौमयन्त्रम् ।। १४

पञ्चत्रिक्ष्मात्रि(क्षिति)कोष्ठमारशरधा गेहे मनुं पञ्चधा
रेखामर्मसु पक्षिकुक्षिमदनं रेखाग्रशूलाभिधम् ।
*राकाधीशनिशेशवर्णविवृतं(त) श्रीशूलिनीसंज्ञितं
यन्त्रं पक्षिविवादभेदविजयं सर्वार्थसिद्धिप्रदम् ।। १५

---

* मातृकायां [स॰ *12166*] पाठः एवं दृश्यते —
मायाकामसमावृ(दं)तं हितकरं भूधान्यगेहादिक-
द्रव्यार्थप्रतिवादिभेदविजयं श्रीशूलिनीयन्त्रकम् ।। इति ।।
तेज(:) षट्क्षितिकामबाणविवरें मूलं कुमारस्यथा-
सारं मर्मपिनाकिहृन्निजर्लिपि सर्वाग्रशूलाभित्त(ध)म् ।।

त्रिद्विक्षमामारबाणस्थलमनुयुगलं सप्तमर्मस्वजान्तं
मारार्णे दिक्त्रि(त्रिद्वि)शूलं विहितलिपिशिखं रेखरेखाग्रदेशे ।
यन्त्रं द्विड्धैर्यलोपप्रदमखिलजयप्राप्कं कोपनाशं
सद्यः सर्वार्थसिद्धिप्रदं अघशमनं शूलिनीयं त्वमोघम् ॥ १६

एतद्गुह्याखिले कर्मण्यान्तं संसाधयेत्सुधीः ।
तत्तत्सिद्धिमवाप्नोति सहसा नैव संशयः ॥ १७

रत्नक्ष्मामध्यचन्द्रे हितमरिदुरितान्मोचयान्तं सवह्नि
वस्वश्रे व्योमभूकानलपवनमुखं मूलमन्त्रं द्विवर्णम् ।
रेखाशूलान्तरालोदरमरुदनलं ग्रासयाशु प्रयोक्तृन्
इत्यग्रेष्वग्निवीतं निखिलरिपुहरं भीषणं शूलिनीयम् ॥ १८

शातकुम्भादिपत्रे वा भस्मन्या(माद्य)लिख्य वस्तुषु ।
प्रतिक्रियाशूलिनीं तां यन्त्रेऽस्मिन् पूज्य दिग्दिनम् ॥ १९

तत्समं प्रजपेन्नित्यं चतुःसन्ध्यासु मन्त्रवित् ।
प्रयोक्तारः प्रणश्यन्ति सूतकूपेऽक्षका इव ॥ २०

**इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण विरचिते दुर्गाक्रियाभेदविधाने नानाविवादविजयो नाम तृतीयोपदेशः ॥**



**शिव उवाच —**

अथान्यं सम्प्रवक्ष्यामि विचित्रकरणं परम् ।
सर्वदोषहरं श्रेष्ठं सर्वाश्चर्यकलाप(व)हम् (स्पदम्) ।। १

गोमयेन समालिप्य भूतलं चतुरश्रकम् ।
कृत्वा सिताक्षतेनैव नव कोष्ठं सलक्षणम् ।। २

हरिद्रालेपितं त्र्यक्षं गन्धाक्षत स(सुमा)मर्चितम् ।
संस्थाप्य धूपितं मध्ये घृतदीपोज्ज्वलच्छिखम् ।। ३

कार्पासबीजं माहेन्द्रे सर्षपं हव्यवाहने ।
मरीचलवणे याम्ये तिलनिम्बदलेऽसुरे ।। ४

वारुणे कलशं सोदं शाखां निम्बस्य मारुते ।
रक्तप्रसूनं कौबेरे भस्मैशान्ये क्रमात्सुधीः ।। ५

प्रागास्य उदगास्यो वा समासीनः स्थितोऽपि वा ।
ऋषिन्यासादिकं (कृत्वा) शूलिनीदेवतामयः ।। ६

क्षुद्ररोगग्रहग्रस्तं वामे संस्थाप्य भागके ।
दक्षिणे काष्ठजाङ्गारं धूमज्वालाविवर्जितम् ।। ७

ओं नमः कृष्णवाससीत्यनया स्वरसङ्ख्यया ।
दीपादिद्रव्यभेदानि मन्त्र्य तत्साध्ययुक्तया ।। ८

क्षुद्रादिस्वेष्टशमनीं ज्वालायां शूलिनीं हृदा (क्रमात्) ।
आवाहनादिपूजान्तं उपचर्योपचारकैः ।। ९

दीपं त्र्यक्षं समादाय नामाद्यर्णस्वरादिकम् ।
केशादिपादपर्यन्तं अवतार्यावतार्य सः ।। १०

परिणीय त्रिधा तेन ग्रस्तं तद्देहमञ्जसा ।
अन्तस्थदेवतामुक्तं ध्यात्वा हुङ्कारपूर्वकम् ।। ११

* नालिकेरमतिक्षिप्रं वलिं दद्याच्छिलातले ।
इन्द्राद्यसुरपर्यन्तकोष्ठद्रव्यैः पृथक् तथा ।। १२

मन्त्रेण परिणीयाथ जुहुयाज्जातवेदसि ।
आदाय सोदकलशं परिणीयाभिमन्त्रयन् (मन्त्र्य च) ।। १३

छायानयनयोस्तारं पश्यन् तं मन्त्र्य पञ्चधा ।
पिधाय चरुदीपेन कलशं ताडयेद्बहिः ।। १४

वीजयेन्मन्त्रवि(मन्त्रयन्)न्मुक्तं पञ्चधा निम्बशाखया ।
रक्तपुष्पैस्तथा मन्त्र्य निक्षिपेदमलोदके ।। १५

भस्मना मन्त्र्य केशादिपादान्तं मातृकान्वितम् ।
ततो दिव्यौषधं युञ्ज्याद्दानहोमजपार्चनैः ।। १६

दिव्येन कर्मणाऽनेन शूलिनीदेवताज्ञया ।
नानाक्षुद्रमहारोगग्रहैर्मुक्तो भवेत्स ना (सदा) ।। १७

तदाद्यारोग्यपर्यन्तं वीक्षणस्पर्शभाषणैः ।
द्विसन्ध्यं मन्त्रयेन्मन्त्री निम्बपत्रेण भस्मना ।। १८

---

* नालिकेरमयं क्षिप्रं ... इति मा० *16122*

यदा कदाचिदथवा प्राप्ते यदि विजृम्भणे ।
तदा ह्यक्षादिभिर्द्रव्यैः मन्त्री सम्मन्त्रयेद् दृढम् ॥ १९

तथापि ज्वलिते तस्मिन् चिकित्सा नास्ति तत्त्वतः (संशयः) ।
अथ वक्ष्यामि शूलिन्या मन्त्रदोषापहारकम् ॥ २०

स्वस्तिदं सर्वलोकानां कायसिध्येकहेतुकम् ।
अतिसूक्ष्ममिदं श्रेष्ठं अमोघं विश्वसिद्धिदम् ॥ २१

विशेषेण मनुष्याणां देहालस्यविमोचनम् ।
क्षुद्रकृत्रिमभूतादिरोगापत्सूपशान्तये ॥ २२

वक्ष्यमाणेन मन्त्रेण साधयेन्मन्त्रवित्तमः ॥ २३

**पञ्चब्रह्माक्षरं तारं**

(ओं) नमो भगवति महाशूलिनि ज्वालामालिनि महाबल-पराक्रमे ज्वल ज्वल प्रज्वल प्रज्वल देवदत्तदेहे वर्तमानवर्तिष्यमाण-समस्तक्षुद्रभूतप्रेतपिशाचरोगान्मोचय मोचय भञ्जय भञ्जय दह दह नाशय नाशय झ्रां झ्रीं झ्रूं अखिलमोहिनि अमृतेश्वरि देवदत्तं केशादिपादपर्यन्तं आप्लावय आप्लावय रक्ष रक्ष कालान्तके सर सर सर्वशत्रुविनाशिनि विलोमेन पञ्चब्रह्मबीजं सर्वदोषापहारिणि हुं फट् स्वाहा ॥

मणि क्ष्माकोणभूतस्थलशशिहृदये मूलमन्त्रं त्रिवारं ।
साध्यं मर्मस्वनङ्गं प्रणवहृदि रिपुं (रवौ) वेदसन्धौ हुताशम् ।
शूलं रेखाग्रदेशे निखिललिपिवृतं सर्वदोषापहारं
क्षिप्रारोग्याभिवृद्धिप्रदमरिविजयं शूलिनीप्राणयन्त्रम् । २४

इदमग्रे समालिख्य भूमौ भस्मनि यन्त्रकम् ।
आवाह्यानेन मन्त्रेण शूलिनीं दोषनाशिनीम् ॥ २५

आराध्य विधिवज्जप्त्वा मन्त्री दशशतं सुधीः ।
ब्राह्मणान् भोजयित्वाऽथ दोषान् अपहरेत्सुधीः ॥ २६

तत्तच्छान्तिकरैः(कर)द्रव्यैः यथावत्कृतमौषधम् ।
* युज्य तत्तत्समं मन्त्र्य वर्णसङ्ख्यमथापि वा ॥ २७

विशुद्धहृदयो मन्त्रो निम्बपत्रैश्च भस्मना ।
तथा स मन्त्रयेच्छुद्धभावेनार्हत्क्रियां ततः ॥ २८

क्षिप्रारोग्याय वै कुर्यात् मन्त्री विगतकल्मषः ।
क्षुद्रभूतादिरोगेभ्यः मुक्तो भवति सत्वरम् ॥ २९

महालिङ्गाभिषेकैश्च ब्राह्मणाराधनैस्तथा ।
उचितैरौषधैर्होमैः दानैरन्यैश्च कर्मभिः ॥ ३०

नानाविधगदक्षुद्रभूतकृत्रिमजालकम् ।
नाशयेद्विविधग्रस्तदेहो वेलानुसारतः ॥ ३१

दिव्येन कर्मणानेन शूलिन्याज्ञाप्रभावतः ।
जन्तून् नानाविधात् दोषात् सद्यो मुच्येत निश्चयः (यम्) ॥

॥ इति श्रीमहाशैवतन्त्रे दुर्गाक्रियाभेदविधाने विचित्रकरणं नाम चतुर्थोपदेशः ॥

* युञ्जीत तत्समं मन्त्र्य इति मा० *12166*

श्रीशिव उवाच –

सर्वोच्चाटं प्रवक्ष्यामि सर्वेषां पापकर्मणाम् ।
एनोनिवृत्तये भूतरोगशान्त्यै सुखाप्तये ।। १

नानाविधग्रहक्षुद्ररोगग्रस्तेषु जन्तुषु ।
शूलिन्युच्चाटकर्माणि प्रारभेद् विधिपूर्वकम् ।। २

ॐ नमो भगवति सहस्रकोटिकालानलसमप्रभे पञ्चमुखवाहनि ज्वालाकेशिनि करालदंष्ट्रवदने कालोरग(वि)भूषिते(त)निखिलावयवे काल(काल)रूपिणि महाबलपराक्रमे महाशूलिनि परमन्त्रयन्त्रतन्त्र-विद्याभेदविध्वंसिनि, महाभयविनाशिनि एह्येहि देवदत्तदेहे वर्तमान-वर्तिष्यमाण-सकलविधक्षुद्रभूतप्रेतपिशाचरोगाद्यनभीष्टग्रहं मोहय मोहय भापय भाषय, मर्दय मर्दय, उच्चाटय उच्चाटय देवदत्तकेशादिपाद-पर्यन्तं रक्ष रक्ष वागादिसर्वेन्द्रियप्रेरकजीवचैतन्यं वर्धय मोदय मोदय सर्वैश्वर्यसिद्धि (समृद्धि) कुरु कुरु ह्लीं श्रीं क्ष्म्र्यूं स्वाहा ।।

अवर्णादिक्षकारान्तमातृकाविधिवत्क्रमात् ।
मन्त्रेणानेन केशाद्यापादं सूक्ष्मविदां वरः ।। ३

सदेहं चेतनस्यान्ते देहस्थं शोषयद्वयम् ।
तथा परे हन द्वन्द्वं (परिहरद्वन्द्वं) आप्लावय परेऽहनि ।। ४

जीवयद्विरहन्यन्ये पुष्टयद्विः परेऽहनि ।
मन्त्रशेषं यथापूर्वं जपन्नेकैकशः क्रमात् ।। ५

मन्त्रसिध्यै सहस्रं स्यात् नित्यं षोडशसङ्ख्यया ।। ६

आवृद्धबाल्यं सुशुभं त्रिलोचनं
हरिद्रगन्धाक्षतपुष्पभूषितम्
आलिप्तभूमौ प्रणिधाय सासनं
दृढप्रदीपं परिकल्प्य मूर्धनि ॥ ७

यथापुराऽऽमन्त्र्य पुनस्त्रिधोदितं
प्रताडयेत् त्र्यक्षमथ प्रदक्षिणम् ।
एवं प्रक्लृप्तार्धदिनं यथातथं
कुम्भं बहिर्द्वारमशेषमुक्तये (मुक्त्यै) ॥ ८

तदुद्धृत्य रहः क्षिप्रं निम्बपत्रैश्च भस्मना ।
क्रमात्तथाऽभिमन्त्र्याथ कुर्यात्तच्छान्तिभेषजम् ॥ ९

तद्भेषजमनर्धं (मवध्यं) स्याद्दानहोमजपार्चनैः ।
तेन क्षुद्रादिभिर्मुक्तो भवेत् दुर्गाम्बिकाज्ञया ॥ ०१

वेदद्वन्द्व (त्रिशद्गेह) चतुस्त्रिकोणहृदयेऽजाजन्तरोगोदरे*
बीजं मृत्युसमन्वितं मनुवरं कालाक्षरेण द्विधा ।
कोणाग्रत्रिशिखाङ्कितं प्रतिभिषग् दत्तौषधोष्णापहं
नानारोगविवर्धनं जयकरं श्रीशूलिनीयन्त्रकम् ॥ ११

(सीसेऽथवा समालिख्य यन्त्रमेतत्सलक्षणम् ।)

आवाह्याराध्य देवेशीं प्रतिवैद्यबलापहाम् ।
अर्धरात्रौ जपेन्मन्त्रीं(न्त्रं) सहस्रं रिपुदिङ्मुखः ॥ १२

---

* ऽजान्तस्थरोगोदरे इदि मा० *12166* पाठः ।

दशाहाद्विकृतिं याति रोगो हन्त्येव तं क्रमात् ॥ १३

मध्ये सस्वशशाङ्कषट्कमजया लक्ष्म्या स्मरेणावृतं
वस्वश्रस्वरशः(स्मरग) स्वमूर्ध्वमनुना ऋद्धेन्दुवेदाक्षरम् ।
कोणत्र्यग्रशिरस्सु नामविजयं श्रीशूलिनीयन्त्रकं
सद्यःस्वौषधवीर्यवृद्धिजनकं सर्वार्तिशान्तिप्रदम् ॥ १४

हिरण्ये रजते भूर्जे कार्ष्णीये पत्रकेऽथवा ।
कृत्वा सलक्षणं यन्त्रं परमामृतशूलिनीम् ॥ १५

आवाह्य पक्षमाराध्य चतुःसन्ध्यासु तन्मयः ।
* तत्साम तत्रसाध्येन जप्तं मूर्ध्नि भुजेन वा ॥ १६

धृत्वौषधं यः प्रयुञ्ज्यात्तु देशिकानुग्रहं स्मरन् ।
स एव सर्वभिषजां भवेदाद्यो यथा वयम् ॥ १७

चतुःक्ष्माज(जा)श्रनाभिस्थलपरिविलसद्ध्रस्वपञ्चक्ष(?)मूर्ध्वं
मूलद्विर्वार(त)युक्तं हृदि मणिमदनौ कोणशूलाग्रनाम ।
पञ्चाशद्वर्णवीतं निखिलगदहरं पुष्टिदं देहभाजां
क्षिप्रारोग्याभिवृद्धिप्रदं अघशमनं शूलिनीसाध्ययन्त्रम् ॥

॥ इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे क्रियाभेदविधाने सर्वोच्चाटविधिर्नाम पञ्चमोपदेशः ॥

---

* तत्सामतस्त्रिसाध्येनेति मा० *12166* ।

## ॥ श्रीशूलिनीविश्वरूपस्तुतिः ॥

**श्रीदेव्युवाच –**

सर्वसिद्धिप्रदायिन्याः शूलिन्याः सर्वबोधक ।
विश्वरूपस्तुतिं श्रोतुं *इच्छाम्यद्याहमादरात् ॥ १

**श्रीशिव उवाच –**

साधु कल्याणि तत्सर्वं यद्यदुक्तं मयाऽधुना ।
अतिगुह्यतमं श्रेष्ठं स्मरणात्सर्वसिद्धिदम् ॥ २

सर्वरोगप्रशमनं सर्वोत्पातविनाशनम् ।
सर्वदुःख(दुर्ग)हरं दिव्यं सर्वभीतिनिवारणम् ॥ ३

सर्वक्रूरक्रियापद्घ्नं सर्वपापविमोचनम् ।
सर्वाभीष्टप्रदं रम्यं सद्यस्तादात्म्यसिद्धिदम् ॥ ४

वक्ष्यमाणस्तुतिं मन्त्री ज्ञात्वा गुरुमुखात् दृढम् ।
ध्यायन् ध्यायन् प्रतिश्लोकं सर्वकर्माणि साधयेत् ॥ ५

नानाविधक्रियाभेदस्वरूपां शूलिनीं क्रमात् ।
ध्यात्वा प्रतिदिनं मन्त्रं (मन्त्री) त्रिवारं प्रजपेत्पृथक् ॥ ६

सकृद्वा सकलां सिद्धिं सुहृद्भिः सह भूतले ।
लब्ध्वा सुखी भवेन्मन्त्री सर्वानुग्रहकृत्स्वयम् ॥ ७

नानाविशेषसङ्कल्पविकल्परहितं फलम् ।
प्राप्नोति नित्यभावात्मा समष्टिव्यष्टिभेदतः ॥ ८

---

* इच्छाम्यहमिहादरात् इति च ।

समष्टयाऽखिलमाप्नोति व्यष्टया तत्तत्क्रियाफलम् ।
तस्मात्सकलरूपां तां ध्यायेत्सकलसिद्धये [1] ॥ ९

अथवा विविधं रूपं पृथक् सङ्कल्पपूर्वकम् ।
भावयन् प्रजपेन्मन्त्रं (मन्त्री) तत्तत्कर्मफलाप्तये ॥ १०

सर्वकार्यसमुद्युक्तः(क्तां) सर्वावरणसंवृताम् ।
शूलिनीं चक्रमध्यस्थां ध्यायन् मूलमनुं जपेत् ॥ ११

[2] ओं श्रीमये जगदाधारे जगदैश्वर्यसिद्धिदे ।
वरदे शूलिनि दुर्गे महाभैरवि पाहि माम् ॥ १२

ओं अमृते अमृतोद्भूते अमृताप्लाविताखिले ।
वरदे शूलिनि दुर्गे महाभैरवि पाहि माम् ॥ १३

ओं आनन्दपूर्णनिलये आगमानामधीश्वरि ।
वरदे ... ... ... पाहि माम् ॥ १४

ओं इक्षुकार्मुकपुष्पास्त्रे इहामुत्रफलप्रदे ।
वरदे ... ... ... पाहि माम् ॥ १५

ओं ईशे ईहादिरहिते ईशादिसुरवन्दिते ।
वरदे ... ... ... पाहि माम् ॥ १६

ओं उत्तमे उत्तमाराध्ये उद्यदादित्यसन्निभे ।
वरदे ... ... ... पाहि माम् ॥ १७

---

1. सर्वार्थसिद्धये इति मा. *12166*

2. सर्वत्र प्रणवपूर्वकमेव पाठः कार्यः इति निवेदनाय मातृकायां प्रणवपूर्वकतया पाठः दृश्यते ।

ओं ऊर्ध्वाधोभागरहिते ऊर्जितज्ञानविग्रहे ।
वरदे शूलिनि दुर्गे महाभैरवि पाहि माम् ।। १८

ओं ऋध्यादिशक्तिसंसेव्ये ऋग्यजुस्सामरूपिणि ।
वरदे ... ... ... पाहि माम् ।। १९

ओं एकानेकविधाकारे एकान्तपदवासिनि ।
वरदे ... ... ... पाहि माम् ।। २०

ओं ऐश्वर्यदाननिरते ऐक्यभावाशुसिद्धिदे ।
वरदे ... ... ... पाहि माम् ।। २१

ओं ओङ्कारनाम(द)रसिके ओजोबलविवर्धनि ।
वरदे ... ... ... पाहि माम् ।। २२

ओं औचित्यचित्तफलदे औदार्यगुणशोभिते ।
वरदे ... ... ... पाहि माम् ।। २३

ओं अम्बिकेऽम्भोजवदने अम्बुदश्यामकोमले ।
वरदे ... ... ... पाहि माम् ।। २४

ओं अष्टाष्टतन्त्रजनके अष्टधाकृतविग्रहे ।
वरदे ... ... ... पाहि माम् ।। २५

ओं करुणापूर्णनयने कल्याणवरदायिनि ।
वरदे .... ... ... पाहि माम् ।। २६

ओं कामेशि कालरहिते कालवैश्वानरोपमे ।
वरदे ... ... ... पाहि माम् ।। २७

खडादि षट्पदक्रूरे खट्वाङ्गमुसलायुधे ।
वरदे ... ... ... पाहि माम् ॥ २८

ओं गर्वोद्धतारिहरणे गम्भीरे गगनाकृते ।
वरदे ... ... ... पाहि माम् ॥ २९

ओं घर्मदे घार्णनादेष्टे(नाथेष्टे) घद्घार्विशाहुतिप्रिये ।
वरदे ... ... ... पाहि माम् ॥ ३०

ओं चण्डोच्चण्डबलप्रौढे चतुर्वर्गफलप्रदे ।
वरदे ... ... ... पाहि माम् ॥ ३१

ओं छन्नभक्ति[क्त्य]प्रिये छाये छत्रचामरशोभिते ।
वरदे ... ... ... पाहि माम् ॥ ३२

ओं जङ्गमाजङ्गमाकारे जगज्जननि जातजे ।
वरदे ... ... ... पाहि माम् ॥ ३३

ओं झञ्झामरुन्मये झाली(लि)झङ्कारपदपङ्कजे ।
वरदे ... ... ... पाहि माम् ॥ ३४

ओं ञमिश्रितार्णमन्त्रार्थरहस्यफलदायिनि ।
वरदे ... ... ... पाहि माम् ॥ ३५

ओं टङ्कायुधसमुध्वस्तमहासुरधराधरे ।
वरदे ... ... ... पाहि माम् ॥ ३६

---

(ङ) उत्तुङ्गशैलनिलये शङ्करप्राणवल्लभे । वरदे ... माम् ॥

[1] ओं ठङ्कारशीत(श्रीकरो)रूद्भावभावनामृतवर्षिणि ।
वरदे शूलिनि दुर्गे महाभैरवि पाहि माम् ॥ ३७

ओं डाडिमीकुसुमप्रोद्यदरुणारुणविग्रहे ।
वरदे ... ... ... पाहि माम् ॥ ३८

ओं ढढं डमरुहस्ताब्जे डिण्डिमध्वानमोदिनि ।
वरदे ... ... ... पाहि माम् ॥ ३९

[2] ओं णार्ण संहृतियोगार्णसंवर्तपरिवर्तिनि ।
वरदे ... ... .. पाहि माम् ॥ ४०

औ तत्वातीते तत्वमये तत्वशोधनतत्परे ।
वरदे ... ... ... पाहि माम् ॥ ४१

ओं दक्षेशि(दक्षारि[दि]) दर्पशमने दलिताखिलसङ्कटे ।
वरदे ... ... ... पाहि माम् ॥ ४२

ओं धर्मादिवर्गफलदे धन्ये धारामृतात्मिके ।
वरदे ... ... ... पाहि माम् ॥ ४३

---

[1] ठद्वयान्तमहामन्त्रभावनामृतवर्षिणि । वरदे ... माम् ॥
मातृकागतपद्यस्य दुर्ग्रहार्थत्वात् एवं भवतु इति भगवतीस्मरणपूर्वं परिवर्त्यते ॥

[2] अयं पद्यभागः यथामातृकं दत्तः । अस्य सङ्गतार्थकत्वे साधकविद्वांस एव प्रमाणम् ॥

(थ) यथाविधिहुतसमिदन्नाज्यप्रीतमानसे । वरदे ... माम् ॥

ओं नमस्कारप्रिये नव्ये नाथे नवरसात्मिके ।
वरदे ... ... ... पाहि माम् ॥ ४४

ओं परामृतप्रवाहे हे परकृत्याप्रमर्दिनि ।
वरदे ... ... ... पाहि माम् ॥ ४५

ओं फलदे फालनयने फट्कारजि(ह)तपा(व)तके ।
वरदे ... ... ... पाहि माम् ॥ ४६

ओं वन्धूकस्निग्धतिलके विम्बाधरदलोज्ज्वले ।
वरदे ... ... ... पाहि माम् ॥ ४७

ओं भद्रकालि भयापद्घ्ने भक्षिताशेषविग्रहे ।
वरदे ... ... ... पाहि माम् ॥ ४८

ओं मनोन्मनि मदोन्मत्ते महेशाराधनप्रिये ।
वरदे ... ... ... पाहि माम् ॥ ४९

ओं यज्ञप्रिये यज्ञमये यथेष्टफलदायिनि ।
वरदे ... ... ... पाहि माम् ॥ ५०

ओं रमादिसुन्दरीपूर्णे (र्ण) राजपीठाधिदेवते ।
वरदे ... ... ... पाहि माम् ॥ ५१

ओं लसत्सोमकलाचूडे लावण्यातिशयोज्ज्वले ।
वरदे ... ... ... पाहि माम् ॥ ५२

ओं वरदाभयहस्ताब्जे *व(वी)राराध्यपदाम्बुजे ।
वरदे ... ... ... पाहि माम् ॥ ५३

---

* वीर शब्दः साधकार्थकः ।

ओं शङ्कादिपाशहृत्णे शङ्करप्रियवल्लभे ।
वरदे ... ... ... पाहि माम् ॥ ५४

ओं षट्षष्टिकोटितीर्थेशि षड्विकारविवर्जिते ।
वरदे ... ... ... पाहि माम् ॥ ५५

ओं सर्वाकारे सर्वमये सर्वाभीष्टवरप्रदे ।
वरदे ... ... ... पाहि माम् ॥ ५६

ओं हर्षिताशेषभुवने हतारातिकुले हरे ।
वरदे ... ... ... पाहि माम् ॥ ५७

ओं क्षमाकारे(करे) क्षमाकारे क्षामक्षोभविभञ्जने ।
वरदे ... ... ... पाहि माम् ॥ ५८

ओं अक्षय्यभाग्यवरदे अक्षानन्दस्वरूपिणि ।
वरदे ... ... ... पाहि माम् ॥ ५९

ओं अंळकेशादिभिर्वन्द्ये अहन्तागर्वशान्तिदे ।
वरदे ... ... ... पाहि माम् ॥ ६०

ओं असतां दूरचरिते अशक्यप्रतितन्त्रके ।
वरदे ... ... ... पाहि माम् ॥ ६१

ओं अवसानमकारस्थे अलसाद्यष्टभेदिनि ।
वरदे ... ... ... पाहि माम् ॥ ६२

ओं अरालालकसुस्निग्धे अयथाभक्तिदुःसहे ।
वरदे ... ... ... पाहि माम् ॥ ६३

ओं अमलेऽभङ्गुरेऽवश्ये अफालाक्षमदापहे ।
वरदे ... ... ... पाहि माम् ।। ६४

* ओं अपराधसहे दान्ते अधर्मगुणदुःसहे ।
वरदे ... ... ... पाहि माम् ।। ६५

ओं अदनाद्याहुतिप्रीते अथाहकमुखाक्षरे ।
वरदे ... ... ... पाहि माम् ।। ६६

ओं अनन्त[तन्त्र]चित्रकरणे अटवीचारतत्परे ।
वरदे ... ... ... पाहि माम् ।। ६७

ओं अजे अघादिरहिते अगराजकुलोद्भवे ।
वरदे ... ... ... पाहि माम् ।। ६८

ओं अखण्डानन्द[न्त] जनके अकालफलदायिनि ।
वरदे शूलिनि दुर्गे महाभैरवि पाहि माम् ।। ६९

अक्षान्ताक्षरभिन्नविग्रहवरे[परे] अन्तादिमध्यात्मिके
अक्षालक्ष्यविचित्रकर्मकलने अत्युत्तमेऽचञ्चले ।
शिक्षारक्षितविश्वजीवसदये चिन्ताघनाशोद्यमे
शिष्टेष्टार्थवरप्रदाननिरते चित्रे(त्ते)श्वरि त्राहि माम् ।।

इतीदं शूलिनीदेव्याः स्तोत्रं सर्वार्थसिद्धिदम् ।
आयुरारोग्यसौभाग्यपुत्रसिद्धि(पौत्र)समृद्धिदम् । ७१

सर्वरोगप्रशमनं सर्वभूतनिवारणम् ।
सर्वक्षुद्रहरं दिव्यं कृत्रिमोपद्रवापहम् ।। ७२

---

* अपराधसहेऽनन्ते इति 12166 मातृकायां ।

चर्मग्रथितकीलादिशल्यभेदनिवर्तकम् ।
पुत्तलीशुष्कपोतादि *कृत(त्रि)(मा)र्कार्ति निबर्हणम् ॥ ७३

सक्ताङ्गुलीयवलयमूलिकाबन्धनार्तिहम् ।
नाडीबन्धाक्षगुम्भादिनानाशून्योपशान्तिदम् ॥ ७४

मातृशास्तृगणादीनां प्रेरणा(ण)व्यसनापहम् ।
मृगपक्ष्यहिमूषादिजीवव्याजार्तिकर्शनम् ॥ ७५

सर्वाभिचारशमनं शङ्काक्षुद्रविमोचनम् ।
अशेषाणामथान्यासां बाधानामुपशान्तिदम् ॥ ७६

तिथिवारर्क्षयोगोत्थसर्वाशुभभयापहम् ।
अरातिराष्ठसैन्यानां आक्रमोपद्रवापहम् ॥ ७७

सर्वपापप्रशमनं सर्वानुग्रहसिद्धिदम् ।
शान्तिपुष्टिकरं योगसिद्धिदं ज्ञानसि(वृद्धि)द्धिदम् ॥ ७८

विशेषात् शूलिनीदेव्याः कटाक्षेक्षणहेतुकम् ।
धर्मार्थकाममोक्षैकहेतुकं विश्वजीवनम् ॥ ७९

य इदं शूलिनीदुर्गादेव्याः स्तोत्रमनुत्तमम् ।
स्मरेद्वा प्रजपेद् ध्यानपूर्वकं विजितेन्द्रियः ॥ ८०

अवाप्य सकलान् कामान् भुक्त्वा भोगान् असङ्ख्यकान् ।
पितृमातृकुलस्निग्धबन्धुभृत्यावृतः स्वयम् ॥ ८१

सृष्ट्यादिपञ्चभेदानां कर्मणां महतां सदा ।
कर्ता भवति लोकानां समाप्तिशयवर्जितः ॥ ८२

---

* कृत्रिमार्तिनिबर्हणम् इति पाठः सङ्गतः भाति ।

स्तोत्रमेतद्वरं दिव्यं रहस्यातिरहस्यकम् ।
मन्त्री विशुद्धहृदयो बाह्यव्यापारवर्जितः ।। ८३

अशेषात्महृदम्भोजवासिनीं परदेवताम् ।
ध्यायन् प्रतिदिनं कुर्यात् जपं सर्वार्तिशान्तये ।। ८४

निग्रहानुग्रहे कार्ये विविधे मन्त्रवित्तमः ।
स्मरन् देवीं जपेत् स्तोत्रं मन्त्रं तत्तदवाप्तये ।। ८५

बहुनोक्तेन किं मन्त्री यत्र यत्र स्मरन् जपेत् ।
तत्र तत्र स्थिता सैव सर्वाभीष्टप्रदा भवेत् ।। ८६

यं यं मनसि संचिन्त्य देवीं ध्यायन् जपेत् स्तुतिम् ।
तं तं काममवाप्नोति सर्वावस्थासु सर्वथा(दा) ।। ८७

अनेन स्तुतिमन्त्रेण मन्त्र्य भस्मादिकौषधम् ।
प्रदापयेदशेषाणां तत्तकर्मा(काम्या)र्थसिद्धये ।। ८८

इति परमरहस्यं स्तोत्रमेतत्परायाः
प्रथितं उपसि भक्त्या ध्यानपूर्वं जपेद्यः ।
जगति निखिलभाग्यं दीर्घमायुः सुपुत्रान्
विपुलविमलकीर्तिं प्राप्य मुक्तो भवेत्सः ।। ८९

**इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण विरचिते दुर्गाक्रियाभेदविधाने विश्वरूपस्तुतिर्नाम षष्ठोपदेशः ॥**

श्रीशिव उवाच —

अथ ते शूलिनीदेव्याः सुमुखीकरणस्तुतिम् ।
प्रवक्ष्यामि समासेन सर्वकामार्थसिद्धये ।। १

ऋषिर्न्यासः षडङ्गं च मूलवद् ध्यानमुच्यते ।। २

ध्याये(त्) *हेमसमोपलासनवरे कन्याजनालङ्कृते
पञ्चब्रह्ममुखामरैः मुनिवरैः सेव्ये जगन्मङ्गले ।
आसीनां स्मितभाषिणीं शिवसखीं कल्याणवेषोज्ज्वलां
भक्ताभीष्टवरप्रदाननिरतां विश्वात्मिकां शूलिनीम् ।। ३

ओंङ्कारमन्त्रपीठस्थे ओषधीशामृतोज्ज्वले ।
ऐश्वर्यमायुरारोग्यं इष्टसिद्धिं च देहि मे ।। ४

श्रीपूर्णे श्रीपरे श्रीशे श्रीमये श्रीविवर्धने ।
ऐश्वर्यं — — — देहि मे ।। ५

कामेशि कामरसिके कामितार्थफलप्रदे ।
ऐश्वर्यं ... — — देहि मे ।। ६

मायाविलासचतुरे माये मायाधिनायिके ।
ऐश्वर्यं — — — देहि मे ।। ७

चिन्तामणेऽखिलाभीष्टसिद्धिदे विश्वमङ्गले ।
ऐश्वर्यं — — — देहि मे ।। ८

सर्वबीजाधिपे सर्वसिद्धिदे सिद्ध(सर्व)रूपिणि ।
ऐश्वर्यं — — — देहि मे ।। ९

---

* हेमसमुज्ज्वलासनवरे इति सङ्गतःपाठः भाति ।

ज्वलत्तेजस्त्वयानन्तकोटिकोटिसमद्युते ।
ऐश्वर्यं — — — देहि मे ॥ १०

लसच्चन्द्रार्धमकुटे लयजन्मविमोचके ।
ऐश्वर्यं — — — देहि मे ॥ ११

ज्वररोगमुखापत्तिभञ्जनैकधुरन्धरे ।
ऐश्वर्यं ... ... ... देहि मे ॥ १२

लक्षलक्ष्ये लयातीते लक्ष्मीवर्गवरेक्षणे ।
ऐश्वर्यं ... ... ... देहि मे ॥ १३

शूराङ्गनानन्तकोटिव्यापृताशेषजालके ।
ऐश्वर्यं ... ... ... देहि मे ॥ १४

लिपे लिङ्गादिदिक्स्थाननियताराधनप्रिये ।
ऐश्वर्यं ... ... ... देहि मे ॥ १५

निर्मले निर्गुणे नित्ये निष्कले निरुपद्रवे ।
ऐश्वर्यं ... ... ... देहि मे ॥ १६

दुर्गे दुरितसंहारे दुष्टद्रुल(तूलान्त) पावके ।
ऐश्वर्यं ... ... ... देहि मे ॥ १६

रमामये अ[उ](र)मासेव्ये रमावर्धनतत्परे ।
ऐश्वर्यं ... ... ... देवि मे ॥ १७

ग्रसिताशेषभुवन(ने) ग्रन्थिसन्ध्यर्णशोभिते ।
ऐश्वर्यं ... .. ... देहि मे ॥ १९

हंसतार्क्ष्यवृषारूढैराराधितपदद्वये ।
ऐश्वर्यमायुरारोग्यं इष्टसिद्धिं च देहि मे । २०

हुङ्कारकालदहनभस्मीकृतजगत्त्रये ।
ऐश्वर्यं ... ... ... देहि मे ॥ २१

फठ्कारचण्डपवनोद्घासिताखिलविग्रहे ।
ऐश्वर्यं ... ... ... देहि मे ॥ २२

स्वीकृतस्वामिपादाब्जभक्तानां स्वाभिवृद्धिदे ।
ऐश्वर्यं ... ... ... देहि मे ॥ २३

हालाहलविपाकारे हाटकारुणपीठिके ।
ऐश्वर्यं ... ... ... देहि मे ॥ २४

मूलादिब्रह्मरन्ध्रान्तज्वल(मूल)ज्ज्वालास्वरूपिणि ।
ऐश्वर्यं ... ... ... देहि मे ॥ २५

वषडादिक्रियाषट्कमहासिद्धिप्रदे परे ।
ऐश्वर्यं ... ... ... देहि मे ॥ २६

सर्वविद्वन्मुखाम्भोजदिवाकरसमद्युते ।
ऐश्वर्यं ... ... ... देहि मे ॥ २७

नानामहीपहृदयनवनीतद्रवानले ।
ऐश्वर्यं ... ... ... देहि मे ॥ २८

अशेषज्वरसर्पाग्निचन्द्रोपलशशिद्युते ।
ऐश्वर्यं ... ... ... देहि मे ॥ २९

महापापौघकलुषक्षालनामृतवाहिनि ।
ऐश्वर्यं ... .. ... देहि मे ॥ ३०

अशेषकायसम्भूतरोगतूलानलाकृते ।
ऐश्वर्यं ... ... ... देहि मे ॥ ३१

ओषधीकूटदावाग्निशान्तिसम्पूर्णवर्षिणि ।
ऐश्वर्यं ... ... ... देहि मे ॥ ३२

तिमिरारातिसंहारदिवानाथशताकृते ।
ऐश्वर्यं ... ... ... देहि मे ॥ ३३

सुधार्द्रजिह्वावर्त्यग्रसुदीपे विश्ववाक्प्रदे ।
ऐश्वर्यं ... ... ... देहि मे ॥ ३४

अरात्यवनिपानीक *कुलोच्चाटमहानिले ।
ऐश्वर्यं ... ... ... देहि मे ॥ ३५

समस्तमृत्युतुहिनसहस्रकिरणोपमे ।
ऐश्वर्यं ... ... ... देहि मे ॥ ३६

सुभक्तहृदयानन्दसुखसंवित्स्वरूपिणि ।
ऐश्वर्यं ... ... ... देहि मे ॥ ३७

जगत्सौभाग्यवलदे जङ्गमस्थावरात्मिके ।
ऐश्वर्यं ... ... ... देहि मे ॥ ३८

---

* तूलोच्चाटमहानिले ।

धनधान्याब्धिसंवृद्धिचन्द्रकोटिसमोदये ।
ऐश्वर्यमायुरारोग्यमिष्टसिद्धिं च देदि मे ॥ ३९

सर्वजीवात्मधेन्वग्रसमच्र्यानिल (समुच्चालन) वत्सके ।
ऐश्वर्यं ... ... ... देहि मे ॥ ४०

तेज:कणमहावीरसमावीतान्त्यपावके ।
ऐश्वर्यं ... ... ... देहि मे ॥ ४१

नानाचराचरविषदाहोपशमनामृते ।
ऐश्वर्यं ... ... ... देहि मे ॥ ४२

सर्वकल्याणकल्याणे सर्वसिद्धिविवर्धने ।
ऐश्वर्यं ... ... ... देहि मे ॥ ४३

सर्वेशि सर्वहृदये सर्वाकारेऽनिराकृते ।
ऐश्वर्यं ... ... ... देहिं मे ॥ ४४

अनन्तानन्दजनके अमृतेऽमृतनायिके। (आत्मनायिके) ।
ऐश्वर्यं ... ... ... देहि मे ॥ ४५

रहस्यातिरहस्यात्मरहस्यागमपाल (लि) के ।
ऐश्वर्यं ... ... ... देहि मे ॥ ४६

आचारकरणातीते आचार्यकरुणामये ।
ऐश्वर्यं ... ... ... देहि मे ॥ ४७

सर्वरक्षाकरे भद्रे सर्वशिक्षाकरेऽतुले ।
ऐश्वर्यं ... ... ... देहि मे ॥ ४८

सर्वलोके सर्वदेशे सर्वकाले सदाम्बिके ।
ऐश्वर्यमायुरारोग्यमिष्टसिद्धिं च देहि मे ॥ ४९

आद्येऽनादिकलाविशेषविवृतेऽनन्ताखिलात्माकृते
आचार्याङ्घ्रिसरोजयुग्मशिरसामापूरिताशामृते ।
संसारार्णवतारणोद्यतकृपासम्पूर्णदृष्ट्याऽनिशं
दुर्गे शूलिनि शङ्करि स्नपय मां त्वद्भावसंसिद्धये ॥ ५०

इति परमशिवायाः शूलिनीदेवतायाः
स्तुतिमतिशयसौख्यप्राप्तये योऽनुवारम् ।
स्मरति जपति विद्वान् संवृतोऽशेषलोकैः
निखिलसुखमवाप्य श्रीशिवाकारमेति ॥ ५१

**इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण विरचिते दुर्गासुमुखीकरणस्तुतिर्नाम सप्तमोपदेशः ॥**



श्रीदेव्युवाच –

श्रीशूलिनीमन्त्रविशेषयन्त्र-
क्रियाप्रयोगाण्यधुना श्रुतानि ।
क्रियाविचित्रं निखिलैरवेद्यं [1]
यथातथं वक्तुमिहार्हसि त्वम् ॥ १

श्रीशिव उवाच –

मन्त्राणि तन्त्राणि तथा प्रयोग-
भेदान्यशेषाणि मयेरितानि[2] ।
क्रियाविचित्रं परमं रहस्यं
सुगोपितं देवि वदाम्यहं ते ॥ २

यदत्र ते सुन्दरि वक्ष्यमाणं
परैरवेद्यं मम चेतसि स्थितम्[3] ।
तदात्मशु(सि)द्धिप्रदमाशु सर्व-
क्रियाविचित्रं विविधार्थदं च ॥ ३

यथा क्रियेच्छा विहिता तदानीं
देवीमयो देशिकपादलक्ष्यः ।
तदाज्ञयाऽभीष्टमुखीं प्रयोग-
विद्यां स्मरेदिष्टफलार्थसिध्यै ॥ ४

---

1. निखिलैरभेद्यं 2. मयोदितानि ॥
3. मम चेतसिस्थम् ।

येनायुधेनेप्सितसंङ्ख्यकेन
विरोधिनं पीडयितुं त्वमन्ये(विचिन्त्यते) ।
तेनैव तत्सङ्ख्यसमायुधेन
तदङ्गदेशे परिपीडयेत्सा ॥ ५

तदा तथा तां इष्टतमामभिन्नां
समस्ततन्त्रोचितहेतिहस्ताम् ।
लीलाविशेषैरखिलांश्च लोकान्
विबाधयन्तीं सततं वितन्वन् ॥ ६

जपेन्महामन्त्रमिदं(मं) मनीषी
विरोधिदर्पोपशमावसानम् ।
पुनः स्वहस्तोपहृतायुधां तां
ध्यायन् यथामूलमनुं जपेत् सम् (सः) ॥ ७

तस्मादिदं मन्त्रवरं सुगोप्यं
न ख्यापनीयं क्वचिदप्यसत्सु ।
प्रकाशयेद्देशिकभक्तिभाजां
क्रियाविचित्रं स रहः क्रमेश ॥ ८

सूच्यादिहेतिनामाद्यवर्णयुङ्मूलबीजकम् ।
सूच्यादिहेतिविविधचित्रलीलाविनोदिनी ॥ ९

रूपेणाथ ज्वलद्वन्द्वं देवतानाम तत्परम् ।
साध्यावयवदेशेऽस्मिन् हृस्थं (कर्म)कुरुद्वयम् ॥ १०

वर्माग्निभार्यया पूर्णं मन्त्रवर्णमभीष्टदम् ।
दृढव्रतो जपेदान्तं क्रियाचित्रफलाप्तये ॥ ११

मन्त्रोऽयमुद्धृतः सर्वनिग्रहानुग्रहे परे ।
तस्मादत्युत्तमः साक्षात् सर्वाधिकफलप्रदः । १२

मनोवाक्कायकरणैः जङ्गमस्थावरं जगत् ।
स्रष्टुं सुरक्षितुं हन्तुं अनेन सुलभं भवेत् ॥ १३

क्रियाविचित्रसूक्ष्मस्य रहस्यं परिजानतः ।
असाध्यं कर्म नास्त्येव सर्वलोकेषु सर्वदा ॥ १४

देशिकेशप्रसादेन ज्ञात्वा विगतकल्मषः ।
क्रियाविचित्रकर्माणि साधयेत्सर्वसिद्धये ॥ १५

आयुधानामशेषाणां आद्यवर्णेन(नामाद्यर्णेन) पावकम् ।
उद्धृत्य मूलबीजादौ प्रयुक्तं कर्म वैरिणाम् ॥ १६

लक्ष्याङ्गं प्रथमं दग्ध्वा पीडयन्त्या यथोचितम् ।
समनन्तरयोगस्तु पीडयित्वा दहेत्तथा ॥ १७

एवं सवारुणं वेपे शोषणे सप्रभञ्जनम् ।
पोषणे वसुधोपेतं शुद्धं केवलपीडने ॥ १८

अग्न्यम्बुवायुभूबीजचतुर्षूभययोगतः ।
तत्तद्गुणाधिकं भूयात् मिश्रामिश्रे तु तत्क्रमात् ॥ १९

अमिश्रमथवा मिश्रं मिश्रामिश्रविमिश्रितम् ।
विचित्रकरणे शस्तं रिपुगर्वप्रशान्तये ॥ २०

तस्माद्यथेष्टमालोच्य साधयेत् सुदृढं बुधः ।
कर्मणामप्यशेषाणां कर्ता भवति नीतिमान् ॥ २१

यथामिश्रं तथा पोडा यद्यद्यत्र यथा स्मृतम् ।
तत्तत्तत्र तथा तोदो भवत्येत्र विरोधिनाम् ।। २२

येनायुधेन विविधगुणरूपेण चित्रधा (चित्रया) ।
विविधावयवेऽरीणां भवेद्विविधवेदना ।। २३

प्रतिक्षणादिप्रत्यव्दपर्यन्तेष्विष्टकल्पनम् ।
कल्पयित्वा जपेन्मन्त्री पीडनाय दुरात्मनाम् ।। २४

क्वचिद्वापः क्वचिद्वायुं क्वचिदाग्नि क्वचिद्धराम् ।
संयोज्य साधयेन्मन्त्रं तथैवारिव्यथाप्तये(व्यथाय वै) ।। २५

एवमूह्याखिलानन्यान् प्रयोगान्मन्त्रवित्तमः ।
साधयेत् स्थिरभावेन सहसाभीष्टसिद्धये ।। २६

इति सकलजगत्क्रियाविचित्र-
कर्माऽ(क्रमम)हितमदप्रभेदशान्त्यै ।
निजपरमगुरुप्रसादलब्धं
परिचयतु वुधः सुखाभिवृध्यै ।। २७

॥ इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण विरचिते दुर्गांप्रयोगभेदनिधाने क्रियाविचित्रं नाम अष्टमोपदेशः ॥

श्रीशिव उवाच –

अथ मन्त्रानुवेधस्य रहस्यातिरहस्यकम् ।
समासेन प्रवक्ष्यामि शृणु सर्वार्थसिद्धये ॥ १

सिद्धेन मन्त्रेण समस्तमन्त्रान्
क्रमेण वा व्युत्क्रमतोऽनुविध्य ।
प्रवक्ष्यमाणेन पथा मनीषी
संसाधयेदाफलमिष्टसिध्यै ॥ २

सिद्धमन्त्रस्य वर्णान्ते स्वेष्टमन्त्राक्षरं तथा ।
पार्श्वयोरनुविध्याथ शेषं मध्ये तु तत्क्रमात् ॥ ३

तयोर्द्वित्रिचतुःपञ्चषट्सप्ताष्टनवादिभिः(तः) ।
क्रमसङ्ख्याधिकन्यूनं सर्वं मध्ये प्रयोजयेत् ॥ ४

न्यूनैकाक्षरमन्त्राणि तथैवैकैकमन्तरा ।
तथा द्वयं द्वयं त्रिस्त्रिः चतुश्चतुरिति क्रमात् ॥ ५

अतिन्यूनं यथामध्यं पार्श्वयोरुभयोः समम् ।
तच्छिष्टमपि तन्मध्ये वृद्धावपि तथाम्बिके ॥ ६

एवमेव विवाधासु संविभज्य द्विधा मनुम् ।
पार्श्वयीरुभयोर्बाह्यात् मध्ये मन्त्रादिमस्तकम् ॥ ७

साधयेदनुविध्याथ सर्वशिक्षाकरः स्वयम् ।
द्विधा विभक्तमन्त्रार्णान् आरोहप्रतिरोहतः ॥ ८

समं योज्यानुविध्याथ साधयेदन्यथा कृतौ ।
आरोहद्वितयं विध्वकोपवृध्यै विरोधिनोः ॥ ९

अवरोहद्वयं सर्ववैरिभाग्यक्षयाय वै ।
त्रिधा विभज्य मन्त्रार्णान् त्रिपु चैकैकशः क्रमात् ॥ १०

नानारातिशरीरस्य सङ्कोचाय प्रसाधयेत् ।
अरिमध्याङ्गबाधायै क्रमात् व्युत्क्रमनः क्रमात् ॥ ११

ऊध्वाधोभागबाधार्थं क्रममध्यद्विरुत्क्रमम् ।
एवमूह्य चतुर्धादि यावद् द्वन्द्वाक्षरक्रमम् ॥ १२

साधयेदरिदेहस्य विचित्रोपद्रवाय वै ॥ १३

एतैर्दृढैवर्णविचित्रयोगै-
रसतिनां रोगमयप्रबाधा ।
भवेदशक्यप्रतिकर्मबाधा-
ऽलङ्घ्यार्तिदाऽव्यक्तगुणाऽनिरूप्या ॥ १४

इति सकलविधानुवेधगुह्य-
क्रमवरमतुलप्रयोगसूक्ष्मम् ।
शिवगुरुचरणप्रसादलब्धं
परिभणतु बुधस्त्वभीष्टसिध्यै ॥ १५

**इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण विरचिते मन्त्रानुवेधरहस्यं नाम नवमोपदेशः ॥**



श्रीशिव उवाच —

क्रियाऽमोघं प्रवक्ष्यामि पराशक्त्याः समासतः ।
यस्य स्मरणमात्रेण विश्वसिद्धिकरो भवेत् ॥ १

विश्वात्मिकां पराशक्तिं शूलिनीं विविधप्रभाम् ।
धर्मोचितायुधधरां करुणापूर्णलोचनाम् ॥ २

सर्वावरणविद्याभिः सेव्यमानामचञ्चलाम् ।
सर्वाभीष्टवरानन्तफलदां सर्वतोमुखाम् ॥ ३

स्वेष्टं कर्तुमकर्तुं तदन्यथाकर्तुमञ्जसा ।
समुद्युक्तां सदानन्दचिद्रूपाममृतोज्ज्वलाम् ॥ ४

लीलया सकलान् लोकान् लालयन्तीमतन्द्रिताम् ।
ध्यायन् तदात्मभावेन मन्त्रराजं सदा जपन् ॥ ५

चिन्तयेद् देशिकेशाङ्घ्रिद्वितयं सावधानतः ।
स सर्वसिद्धिमान् सद्यो भवत्यात्मेश्वराज्ञया ॥ ६

मानहानिगुणाधिक्यं यथा हेम्नस्तु पाकतः ।
देहाभिमानहानिश्च स्वात्मलाभः स्ववीक्षणात् ॥ ७

स्वात्मलाभाय देहस्य मानं त्यक्त्वा शनैः शनैः ।
कुर्यादतन्द्रितो मन्त्री देवतात्मैक्यवासनाम् ॥ ८

वासनाभिरनन्ताभिर्जाग्रत्स्वप्नसुषुप्तिषु ।
विहरेद्देवतादेही देशिकाज्ञानुपालकः ॥ ९

अन्तर्बहिर्व्याप्ततम:स्वरूपो
जीवो यदाज्ञापरिपालनेन ।
श्रीशूलिनीमूर्तिमणिप्रभावात्
प्रभाकर: स्यात् जगदेकबोद्धा ।। १०

अनामरूपा बहुनामरूपा
त्रिशूलिनी देहभृतां सवित्री ।
तदात्मभावस्मरणक्षणेन
स्वरूपदा स्यात् कृपया भवानी ।। ११

तस्मात्समस्ताकृतिचित्रदेहां
छन्नामहङ्कारगुणावृतानाम् ।
विचिन्तयन्नाथपदावलम्बी
स्मरेदभीष्टं मनुमिष्टसिद्ध्यै ।। १२

देवतासु समस्तासु यत्सिद्ध्यै या तु देवता ।
तां तां सम्बोधनेनैव मन्त्रयेत्तत्तदाप्तये ।। १३

येन जीवेन यत्कार्यं मन्त्रिणामस्ति भूतले ।
तत्रैव देवतां काञ्चित् ध्यात्वा सम्मन्त्रयेत्सुधी: ।। १४

यदस्ति कार्यं जगति मन्त्रिणां दृढचेतसाम् ।
शूलिनीमूर्तिभावेन साधयेत्सर्वसिद्धये ।। १५

नानाविकल्पसङ्कल्पशरीरेषु यथारुचि ।
यत्कर्म कर्तुमुद्युङ्क्ते शूलिन्यात्मा करोतु स: ।। १६

वर्ज्यावर्ज्यविभेदानि पापपुण्यमयानि हि ।
(द्वि)विभेदरहितो मन्त्री शूलिन्यात्मा भवेद् ध्रुवम् ।। १७

शुभाशुभव्याधिविशेषविघ्नैः
स्वरूपभावो यदि विस्मृतः स्यात् ।
तेजोविमुक्तोल्मुकवन्मनीषी
प्रणष्टवीर्याल्लघुतामुपैति ॥ १८

स्वदेहचेष्टा निखिला तदीया
स्वयं शिवा विश्वजनैरुपास्या ।
स्वजल्पमव्याहतमेव सिद्धं
स्वचिन्तनं नाथपदाब्जयुग्मम् ॥ १९

अशेषलोकाभिमुखं विलोक्य
यदीरितव्यं दृढचेतसा तत् ।
निजात्मनाथेङ्गितभावपूर्वं
प्रभावयेत्केवलमप्यशेषम् ॥ २०

सुराङ्गनाभिः परिवारिताभिः
सुरैरशेषैरखिलैस्तथान्यैः ।
उपास्यमानोऽहमिति व्यवस्था-
स्त्वमोघभावो जगदीश्वरः स्यात् ॥ २१

श्रीशूलिनीमेवमनन्यभावो
मनुं वितन्वन् हृदि मूर्ध्नि नाथम् ।
आदर्शभूतेष्वखिलेषु पश्यन्
प्रभावयेदैक्यविशेषसिध्यै ॥ २२

श्रीदेवतात्मप्रतिविम्बभावं
सर्वेषु जन्तुष्वपि चिन्तयेद्यः ।
स मन्त्रवित् सर्वजगन्निवासैः
सुहृद्भिरभ्येति परैश्च मुक्तिम् ॥ २३

शूलिनीदेवतामूर्तिसिद्धो विविधरूपधृक् ।
क्रियोज्झितेषु लक्ष्येषु जपेत् ध्यायन् स्वमूर्तिकम् ॥ २४

निखिलासु कलास्वेवं देव्यात्माऽशेषसंवृतः ।
देशिकाज्ञाधरो मन्त्री सर्वतः सिद्धवाग्भवेत् ॥ २४

पुनःपुनर्विशेषेण साधकाभीष्टसिद्धये ।
कथितं ते जगद्रूपे किं पुनः श्रोतुमिच्छसि ॥ २५

**॥ इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण विरचिते दुर्गाक्रियाभेदविधाने दशमोपदेशः ॥**



**श्रीदेव्युवाच —**

श्रीशूलिन्या महादेव्या रहस्यं निखिलं श्रुतम् ।
विशेषाच्छ्रोतुमिच्छामि सर्वलोकविचालदम् ॥ १

**श्रीशिव उवाच —**

साधु कल्याणि देवेशि यदुक्तमधुना त्वया ।
प्रवक्ष्यामि तव स्नेहाद्रहस्यातिरहस्यकम् ॥ २

अध्यारूढां मृगेन्द्रं सजलजलधरश्यामलाँ हस्तपद्मैः
    शूलं बाणं कृपाणं त्वरिजलजगदाचापपाशान् वहन्तीम् ।
चन्द्राचूडां(न्द्रोत्तंसां) त्रिणेत्रां चतसृभिरसिना खेटकं बिभ्रतीभिः
    कन्याभिः सेव्यमानां प्रतिभटभयदां शूलिनीं भावयामि । ३

एवं ध्यात्वा जपेन्मन्त्रं रिपुनामविमिश्रितम् ।
* अष्टोत्तरशतादेव भवेद्वैरी पराजितः ।। ४

आलिख्य शान्तत्रितयावृतान्त-
    र्वह्निः शिरोऽधस्त्रिशिखं दलादौ ।
स्वकीयकार्योचितवाचकान्ते
    दुर्गेति तत्पूज्य तु मातृशास्त्रोः ।। ५

द्वारेऽथवा रोगिगले करे वा
    नयेल्लभेदिष्टफलार्थसिद्धिम् ।
भूतामयघ्नं द्विपदां चतुष्पा-
    च्चराचराणां अचिरेण नूनम् ।। ६

स्रंकारं वेदमूलं जितरिपुबहुलं श्यामलं वीरभद्रं
    खट्कारं व्योमकेशं घणघणनिनदं खड्गखेटाग्रहस्तम् ।
हुंकारं भीमनादं हुतवहनयनोद्दण्डमानाखिलाशं
    फट्कारं वज्रदंष्ट्रं प्रणतरिपुजनप्राणहर्तार(हन्तार)मीडे ।।

स्रं खं विद्वेषिहननाय वीरभद्राय खट्(खं) गं ह ह्रीं ।
दक्षध्वंसनाय द्रां द्रां र र र हुं फट् स्वाहा ।। ८

---

* विलोमेन मिश्रितमित्यर्थः ।

एतन्मन्त्रं महावीर्यं वीरभद्रं महोज्ज्वलम् ।
सहस्रं प्रजपेद् भ(श)क्त्या निग्रहेऽनुग्रहेऽथवा ।। ९

मूलमन्त्रावसाने तु ब्रह्माण्याद्यष्ट मातृकाः ।
दिक्पालांश्च श्रियं मायां ततः सुम्भनिसुम्भकम् ।। १०

महिषं धर्मसिह्मं च वीरेशं क्षेत्रपालकम् ।
विघ्नेश्वरं च रुद्रं च कालं स्कन्दं पृथक् पृथक् ।। ११

स्वस्वबीजेन मन्त्रेण योजयित्वाथ साध्यकम् ।
सहस्रं प्रजपेन्मन्त्री तत्तत्काम्यार्थसिद्धये ।। १२

शतवारं जपेन्नित्यं पञ्चाशद्वर्णपूर्वकम् ।
सर्वसिद्धिं समाश्रित्य स मन्त्री सुखमेधते ।। १३

भानुमालोकयन्मन्त्री भानुबीजयुतं मनुम् ।
भानुवारे जपेत्सद्यो भानुवद्भाति भूतले ।। १४

* ठं सं झ्रं सं च जुं सं च योजयित्वाऽथ पूर्ववत् ।
भानुमालोकयन् मन्त्री प्रजपेत्सोमवारे ।। १५

निर्वीर्याग्रलतापुष्पफलभूरुण्मुखादयः ।
तद्भानुवेशनादेव जायन्ते सफला ध्रुवम् ।। १६

विशेषदिवसेभानुं येन बीजेन यो जपेत् ।
तत्सिद्धिं लभते तस्य[तत्र] (स स्यात्) संशयो नास्ति तत्वतः ।।

।। इति श्रीमहाशैवतन्त्रे अतिरहस्ये वाकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण विरचिते दुर्गाविश्वपालनविधाने एकादश उपदेशः ।।

---

* ठं वं झ्रूं झं च जुं ह्लीं सेः इति मातृकायाम् । (12166)

श्रीशिव उवाच –

श्रीशूलिनीमहादेव्याः यन्त्रपीठस्य लक्षणम् ।
विशालदीर्घमानं च घनमानं शृणूच्यते ॥ १

यन्त्रासनं यन्त्रपीठं पटं पट्टं च पट्टिकाम् ।
पट्टिका पीठिका धात्री फालिका फलकस्तथा ॥ २

अङ्गुष्ठपर्वमात्रः स्यात् पीठिकैकाक्षरस्य च ।
एकावरणयन्त्रस्य फलकोऽङ्गुष्ठमात्रकः ॥ ३

कनिष्ठकाङ्गुलं मानं आवृतिद्वितयस्य च ।
आवृतित्रययुक्तस्य *धात्र्यनामिकसम्मिता ॥ ४

चतुःपञ्चावृतेः पीठं मध्यमाङ्गुलसम्मितम् ।
षट्सप्तावृतियन्त्रस्य पञ्चाङ्गुलमितीरितम् ॥ ५

अष्टावरणयन्त्राणां तिर्यगूर्ध्वं षडङ्गुलम् ।
ततो नवावृतिमुखयन्त्रपीठस्य तत्क्रमात् ॥ ६

अर्धाङ्गुलक्रमेणैव दीर्घविस्तारमीरितम् ।
मन्त्राक्षरमसम्मिश्रं तत्र तत्र यथा भवेत् ॥ ७

तथा तथावृतिस्थानेष्ववकाशः प्रशस्यते ।
यन्त्रपीठस्य सङ्कोचात् अव्यक्ताक्षरलेखनात् ॥ ८

---

* धात्री — पृथिवीबीजोच्चारणपूर्वं प्रथमगन्धोपचारकरणाय यत्र पर्वणि [कनिष्ठिकायां मध्यमर्वणि] अङ्गुष्ठं निक्षिप्यते (न्यस्यते) तत्पर्वसहिताऽनामिकासम्मिता इति प्रतीयते ।

अक्षराक्षरसंमिश्रात् अन्यथा भवति ध्रुवम् ।
समावकाशफलकात् सुव्यक्ताक्षरलेखनात् ॥ ९

सर्वयन्त्राणि सिध्यन्ति साक्षाच्छिववचो यथा ।
अतिसूक्ष्मनतिस्थूलं अतिमात्रममात्रकम् ॥ १०

न कल्पयेत् यन्त्रपीठं सर्वकर्मसु यन्त्रवित् ।
एकावृत्यादिसर्वेषां पृथगर्धाङ्गुलं क्रमात् ॥ ११

विशाले यन्त्रमाने वा कल्पयेत् यन्त्रपीठिकाम् ।
लेखनासह्यमत्यच्छमितस्थूलं घनं स्मृतम् ॥ १२

सममानमशेषाणां यन्त्राणां पीठमुच्यते ।
न्यूनमानमसिध्यै स्यात् अधिकं निष्प्रयोजनम् ॥ १३

स्थूलाच्छवर्जितं साम्यं सर्वसिद्धिप्रदं भवेत् ।
हिरण्यं राजतं ताम्रं सीसं राजीवकं तथा ॥ १४

पञ्चलोहमिति ख्यातं यन्त्रनिर्माणकर्मणि ।
रूप्यं राजीवकं ताम्रं त्रिलोहमिति कीर्तितम् ॥ १५

हेमादिपञ्चभेदं च पञ्चलोहं त्रिलोहकम् ।
भूर्जपत्रमयस्तालपत्रं वासस्त्वगङ्घ्रिपः ॥ १६

त्रयोदशविधा ज्ञेयाः पीठिकाः सर्वसिद्धये ।
एतानि स्थिरयन्त्राणां भस्माद्यं तत्क्षणस्य च ॥ १७

हेमरूप्यान्यलोहानां पटावृतिकमानकम् ।
आद्ययोरष्टप्रश्नादिमानभेदमिहोच्यते ॥ १८

एकैकाक्षरयन्त्रस्य विरेखाभिवृतस्य च ।
एकावरणयन्त्रस्य चाष्टपृश्नि प्रमाणकम् ॥ १९

द्वितीयावृण(ति)मुख्यानां यन्त्राणां विविधात्मनाम् ।
पृथक् पृथक् चतुःपृश्निप्रमाणमधिकं भवेत् ॥ ३०

समाद्दीर्घप्रमाणस्य तत् षडंशं पृथक् पृथक् ।
कल्पयेन्नाधिकं न्यूनं मन्त्री यन्त्रासनं क्वचित् ॥ २१

छिद्रं सरन्ध्रं भिन्नं च घनाच्छांशं विगर्हितम् ।
असमांशमशेषाणां अशुभप्रदमीरितम् ॥ २२

घनाच्छवर्जितं स्निग्धं चतुरश्रं समाश्रकम् ।
अच्छिद्रं अभितोऽभिन्नं पीठं सद्यःफलप्रदम् ॥ २३

पीठनिर्माणकाले तु भवेद्यदि सलक्षणम् ।
सद्यः फलन्ति यन्त्राणि नान्यथा यत्नकोटिभिः ॥ २४

यन्त्रनिर्माणसवने(समये) रेखाऽन्यत्र गता यदि ।
सुफलं न फलत्येव चिरायासजपादपि ॥ २५

विहितार्णस्थलेऽन्यार्णं यदि मोहेन वा लिखेत् ।
अन्यथा सिद्धिमाप्नोति साक्षाच्छिवसमोऽपि वा ॥ ३६

मन्त्राक्षरविलोपेन कर्तुरायुःक्षयं(यो) भवेत् ।
आलस्यं बीजलोपेन साध्यलोपात् क्रियाक्षयः ॥ २७

तस्माददुष्टयन्त्रस्थरेखावर्णाङ्कितानि च ।
सर्वयन्त्राणि सिध्यन्ति शूलिनी च प्रसीदति ॥ २८

रेखाक्षराणां निर्माणे जागरूकेण चेतसा ।
कृतेऽपि विवशं याते भवेत्तत्तत्क्रियाक्षयः ॥ २९

रेखाक्षरयथाकारात् दृढनिश्चयसाधनात् ।
अविघ्नदेवताध्यानात् अलुप्तार्णमनोर्जपात् ॥ ३०

आद्यन्तनिश्चलाधारात् अस्खलद्गणनाक्षरात् ।
अतीन्द्रियपरिज्ञानात् अखिलं सुलभं भवेत् ॥ ३१

असह्यमश्रद्धमुपाधियुक्त-
मलक्ष्यभावः क्रमविस्मृतिश्च ।
अदेशिकाङ्घ्रिस्मरणं प्रदर्पः
कर्त्रात्मनोःस्वक्षयकृत्प्रयोगः ॥ ३२

इतीदं परं शूलिनीदेवतायाः
प्रयोगोचिताशेषयन्त्रासनानाम् ।
विशेषेण रेखार्णयुक्तावकाश-
प्रमाणादिकं संविदन्त्वात्मनाथात् ॥ ३३

**इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण विरचिते पीठिकादिलक्षणं नाम द्वादशोपदेशः ॥**



श्रीशिव उवाच –

चराचरमये जगत्यखिललोकरोगापहं
परामृतवरोदितं विविधधूपनस्याञ्जनम् ।
अशेषविधविग्रहग्रहविकारशान्तिप्रदं
सुखाय कथयामि तच्छृणु विवोधमन्विच्छताम् ॥ १

श्रृणु देवि प्रवक्ष्यामि धूपनस्यञ्जनौषधम् ।
यस्य प्रयोगमात्रेण धावन्ते विग्रहा ग्रहाः ॥ २

अमृतार्णवसम्भूतं औषधं विश्वसिद्धिदम् ।
विधिवत् यः प्रयुञ्जीत स भवेत् सर्वसाधकः ॥ ३

अनेनैव ग्रहाः सर्वे विषरोगादयस्तथा ।
शङ्काग्रहविषाद्याश्च क्षणाद् धावन्ति निश्चयम् ॥ ४

धूपश्चतुर्विधः प्रोक्तो दीपधूपोऽग्निधूपकः ।
सार्द्रको नार्द्रकश्चेति सर्वपीडानिवृत्तये ॥ ५

दीपधूपो द्विधा प्रोक्तः सतैलातैलकस्तथा ।
सतैलो घ्राणमात्रस्य सर्वाङ्गस्याप्यतैलकः ॥ ६

मरीचं पिप्पलं वापि संचूर्ण्य वरवर्णिनि(नीम्) ।
पृथग् द्वयं त्रयं वापि योज्यं तज्जीर्णवाससा ॥ ७

वर्ति कृत्वा हि तैलेन सिक्त्वा प्रज्वाल्य दीपकम् ।
ज्वालां व्यपोह्य तद्धूपं ग्रासयेद् घ्राणमार्गतः ॥ ८

नासाक्षुद्रं शिरःक्षुद्रं ललाटरक्षुद्रमेव च ।
त्रिस्थानरोगबाधा च त्रिदिनात् शाम्यति ध्रुवम् ॥ ९

शुण्ठीं वचां समालोड्य भूधात्रीपत्रवारिणा ।
त्रिधा मृदुपटे लिप्य शोषयित्वा निरातपे ।। १०

सिक्त्वा कौसुम्भतैलेन धूपयेद् घ्राणरन्ध्रके ।
ललाटजव्यथाक्षुद्रं शमं यात्यचलात्मनाम् ।। ११

निम्बबीजं कृष्णजीरं तिलतैलेन पेषितम् ।
मृद्वंशुके समालिप्य घ्राणरन्ध्रे प्रधूपयेत् ।। १२

मूर्धार्धभागपीडा च पार्श्वलालाटवेदना ।
सप्ताहात् शमनं याति शिरोभारं च कम्पनम् ।। १३

कृष्णवङ्कं(ङ्गं) रसं वन्ध्याकाकोटीरसपेषितम् ।
मृदुजीर्णपटे योज्य निम्बतैलसमन्वितम् ।। १४

पश्चाहं घ्राणधूपेन नाशयेत् क्षुद्रपीनसम् ।
हिङ्गुलं तवसारं च हरितालरसं समम् ।। १५

निशाकन्दरसे पिष्ट्वा वर्ति कृत्वा यथापुरा ।
निम्बतैलेन संसिच्य धूपयेन्नासयोस्त्र्यहम् ।। १६

मुक्तये क्षुद्रसम्भूतसूचीभ्रमरपीनसात् ।
वन्ध्याकाकोटिकाकन्दरसे सूतं सवङ्गकम् ।। १७

साजमोदं समं पिष्ट्वा शोषयित्वांशुकार्पिताम् ।
धूपयेन्निम्बतैलेन नासादेशे यथापुरा ।। १८

शीर्षत्रिदिवसावर्तिक्षुद्रभेदोपशान्तये ।
गन्धकं हरितालं च पारदं कृष्णवङ्गकम् ।। १९

कुसुम्भनिम्बयोर्बीजं निशाचूर्णं समंसमम् ।
पिष्ट्वा सर्षपतैलेन वर्ति कृत्वा यथापुरा ।। २०

युञ्ज्याद्यथापुरा धूपं सावधानं यथासहम् ।
पञ्चावर्तं षडावर्तं कलावर्तमथापि वा ।। २१

क्षणादावत्सरावृत्तं सप्तयोगात्प्रशाम्यति ।
नवसारं समं सूतं पिष्ट्वा सर्षपतैलयुक् ।। २२

धूपयेदखिलाकारं शिरःक्षुद्रविमुक्तये ।
कार्पासशिग्रुकौसुम्भजम्बूवीजानि तत्समम् ।। २३

पिष्ट्वोदुम्बरदुग्धेन लिप्य जीर्णंपटे पुनः ।
शोषयित्वा तदुज्ज्वाल्य धूपयेद् घ्राणरन्ध्रके ।। २४

दर्गन्धश्वासकस्रावनासाभ्रूमध्यवेदनाम् ।
दशाहान्नाशयेद् धूपे विश्वदोषं यथा रविः ।। २५

मातुलुङ्गसुमं पत्रं मूलचर्म च तत्समम् ।
नन्द्यावर्तस्य पयसा पिष्ट्वा कृत्वा यथापुरा ।। २६

धूपयेत् पञ्चधा नासारक्तस्रावोपशान्तये ।
दाडिमीपक्ववीजं च जीरकं नवसारकम् ।। २७

जम्बूफ़लरसे पिष्ट्वा शोषयित्वांशुकेऽथवा ।
धूपो नासामिषस्रावभेदक्षुद्रोपशान्तिदः ।। २८

गुञ्जाबीजं शिग्रुमदं आम्रपुष्पं वटाङ्कुरम् ।
सहस्रवेदिकां सूतं सम्पिष्ट्वा मृदुगन्धके ।। २९

यथापुरा कृतो धूपः षड्दिनादखिलात्मनाम् ।
स्तब्धगन्धतया श्वासभेदक्षुद्रोपशान्तिकृत् ।। ३०

पुनर्नवं च भूधात्री काकोटीं गिरिकर्णिकाम् ।
बलां चित्ररथैरन्धाऽपामार्गाणां च मूलकम् ।। ३१

वृषकाकानतीकोटीशक्रवल्लीदलामृतम् ।
निशाकन्दस्य जम्बीरफलस्यापि रसं समम् ।। ३२

हिङ्गुलं जीरकं गेयखुरासाण्यजमोदकम् ।
पिप्पलीत्र्यक्षतं रास्नावचालशुनसंयुतम् ।। ३३

अर्कक्षीरं च विधिवद् योज्य हेरण्डतैलके ।
पक्त्वाभ्यज्य शनैर्यामिं स्नापयित्वोष्णवारिणा ।। ३४

मृदु केशादिपादान्तं वस्त्रेण परिमार्जयेत् ।
घण्टाघटपटावीतं धूपयेन्मन्त्रवित्तमः ।। ३५

स्वेदप्रवाहपर्यन्तं मन्त्रयेत्सावधानतः ।
तैलाभिषेकधूपैश्च मृदुवस्त्राभिमर्शनैः ।। ३६

मूर्धाङ्गनासिकाक्षुद्रप्रभेदानीतराणि च ।
शिरोव्यथाप्रभेदानि पक्षादेवोपशाम्यति ।। ३७

शिरोबाधाविमोचिन्याः शूलिन्याः प्रीतिवृद्धये ।
ततो वर्णकसाहस्रं ब्राह्मणान् देवि वित्तमान् ।। ३८

विधिवद् भोजयेन्मन्त्री दक्षिणाभ्यङ्गपूर्वकम् ।
वर्णकशतकं वापि दशकं वैकमेव वा ।। ३९

यथावित्तोचितं कुर्यात् श्रद्धाभक्तिसमन्वितः ।
औषधैरखिलोपायैर्यदसाध्यं चिरन्तनम् ॥ ४०

तदनेन शमं याति विषवत्ताक्ष्यदर्शनात् ।
तिक्तकोशातकी नीलीमुण्डिनीशक्रवल्लिका ॥ ४१

भूधात्री वन्ध्यकाकोटी लज्जा चित्ररथं बला ।
एतेषां तत्समं मूलं शिवधान्यप्रमाणकम् ॥ ४२

तत्कषायं भवेत् द्रोणं शाल्मलीत्वग्रसं समम् ।
भृङ्गीकाकानतीपत्ररसं जम्भरसं तथा ॥ ४३

जीरकाकोलवकुलबिलङ्गानि वचोल्लियुक् ।
एरण्डतैलके पक्त्वा वि(द्वि)रेकाहात्परं दिनम् ॥ ४४

मुक्तैकवासराभ्यक्तं स्नापयित्वाऽभिसृष्टके ।
पूर्ववत् धूपयेत्पक्षं सर्वक्षुद्रोपशान्तये ॥ ४५

विशेषेण शिरो(रः)क्षुद्रं कर्णनासाक्षिगोधिनाम् ।
समस्तावयवक्षुद्रं सप्ताहात् शाम्यति ध्रुवम् ॥ ४६

नानाविधामयहरं तैलं कल्केन पूर्ववत् ।
धूपयेत् तत्तदाकारक्षुद्रशान्त्यै ज्वरं विना ॥ ४७

चुच्छन्दरीमलं चूर्णं वचालशुनसंयुतम् ।
सर्पत्वङ्निम्बतैलाक्तं तोदक्षुद्रविमुक्तये ॥ ४८

सर्पत्वङ्निम्बनिर्यासं हिङ्गुग्राहमलं वचा ।
लशुनं तत्समं सर्वं चूर्णितं निम्बतैलयुक् ॥ ४९

सम्मन्त्र्य धूपयेन्नानाक्षुद्रग्रहविमुक्तये ।
लशुनं निम्बपिण्याकं मार्जारस्य पुरीषकम् ॥ ५०

वचायुक्तं समं चूर्ण्यं मन्त्र्य मन्त्राभिषिक्तकम् ।
धूपयेद् दुःसहक्षुद्रमहाभूतनिवृत्तये ॥ ५१

सर्षपं माहिषं श्रृङ्गं गन्धिनी वाजिनः खुरम् ।
धूपयेत् ... ...

धूपयेन्नाना वैरग्रहविमुक्तये ।
... ... ... ... ...
नानातन्त्रोपदिष्टानि कुर्यात् लम्मन्त्र्य मन्त्रवित् ।

भूताञ्जनं वा गरलाञ्जनं वा
नानाविधक्षुद्रहराञ्जनं वा ।
रोगाञ्जनं वा स्वमुखाञ्जनं वा
सम्पाद्य सम्मन्त्र्य सहस्रवारम् ॥

आवाह्य देवीं प्रतिदर्शमेते-
ऽवनन्यचेताः परिपूज्य मन्त्री ।
कार्योचितं नाथकृपाप्रधानं
कुर्यात्तदात्मा निखिलार्थसिद्ध्यं ॥

इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण विरचिते श्रीदुर्गाविश्वचालनविधाने धूपनस्याञ्जनविधानं नाम त्रयोदशोपदेशः ॥



नीलेन्दीवरसन्निभाङ्गलतिकां पूर्णेन्दुबिम्बाननां
शङ्खास्युग्रशरासपाणिकमलां कण्ठीरवाध्यासिनीम् ।
नित्याव्याजकटाक्षवीक्षणसुधाधाराभिषिक्ताखिलां
क्षामक्षोभविमोचनीं शिवसखीं ध्यायेन्महाशूलिनीम् ।। १

मलिनीकरणं वक्ष्ये सर्वेषां पापकर्मणाम् ।
यस्य प्रयोगमात्रेण क्षुभ्यन्त्यखिलजन्तवः ।। २

स्वस्वमर्यादमुल्लङ्घ्य प्रवर्तन्तेऽप्यकर्मणि ।
तेषां प्रवृत्तिशिक्षार्थं कथयामि जगद्धिते ।। ३

शिष्टवाक्यं स्वमर्यादं अतिक्रम्य मुहुर्मुहुः ।
दुष्पथं प्रविशेद्यस्तु स शिक्ष्यः सर्वकर्मभिः ।। ४

निग्रहान्यक्रियायोग्या योषा सर्वार्हकःपुमान् ।
अतिक्रमपथं प्राप्ता *निग्रहानुग्रहाद् ध्रुवम् ।। ५

तस्मादिदं वक्ष्यमाणं मलिनीकरणं भुवि ।
असाधुषु प्रयोक्तव्यमतिसूक्ष्मं यथाविधि ।। ६

येनावयभेदेन कुर्यात्कर्मातिदुःसहम् ।
येनेन्द्रियेण वा तत्तत्शिक्षाकर्म समारभेत् ।। ७

भवजध्वजबीजान्तरम्ल्यनिर्यासचूर्णकम् ।
त्रिनिष्कं मण्डलं क्षिप्य स्थाप्यायस्पात्रमध्यके ।। ८

यदङ्गे लेपयेत्सूक्ष्मं यामादूर्ध्वं तदङ्गकम् ।
अत्यसह्यं भवेद्गन्धं अखिलैरनिवारितम् ।। (?) ९

---

* निग्रहार्हाभवेद् ध्रुवम् ।।

हारिद्रतैलस्नानीयगोमूत्रक्षितिगोमयैः ।
भवत्यतीव दुर्गन्धं शरीरं यावदायुषम् ॥ १०

चन्दनागरुकस्तूरीरोचनाकुङ्कुमादिभिः ।
अनुलेपे कृतेऽसह्यं कण्डूतिर्भवति ध्रुवम् ॥ ११

सर्षपं तिलपिण्याकं अजामूत्रेण पेषितम् ।
आलिप्य षड्दिनं स्नायात् अङ्गदुर्गन्धशान्तये ॥ १२

स्निग्धमूलावृतवटं क्षिप्त्वा भस्मनि निर्मले ।
अयोदण्डेन सम्मर्द्य शोषयित्वा निरातपे ॥ १३

सञ्चिकायां रहः स्थाप्य मण्डलं मन्त्र्य पूर्ववत् ।
प्रयुञ्ज्याद्यस्य कस्याङ्गं पादार्धघटिकात्परम् ॥ १४

अत्यसह्यतमस्तोदो भवत्यङ्गेऽनिवारितम् ।
क्षणे क्षणे वृद्धिमेति प्राणोत्क्रामव्यथा यथा ॥ १५

न शाम्यत्यखिलोपायैः मन्त्रयन्त्रक्रियात्मकैः ।
दर्पशान्तिः शिवास्तिक्यं प्रावीण्यं च यदा भवेत् ॥ १६

पञ्चधा स्नापयेच्छान्त्यै नागवल्लीदलाम्भसा ।
पवमानस्यारिमर्दं अयःपात्रेण गोपितम् ॥ १७

युञ्ज्यादनन्यसंवेद्यमणुमात्रमणुक्षते ।
शूलिन्याज्ञाप्रभावेण पापिनो दुष्टचेतसः ॥ १८

क्षणादाक्रम्य सर्वाङ्गमर्धयामे ग्रसत्यसून् ।
अनिवार्यमिदं कर्म देवताभिर्मुनीश्वरैः ॥ १९

विषवत्सप्तमे वेगे प्रयुञ्ज्यान्निर्विषामृतम् ।
त्रिषबीजरसं मन्त्री नखेनैव वहन् रिपोः ॥ २०

मद्यः क्षतेषु संयुञ्ज्यात् देवीं रोषोज्ज्वलां स्मरन् ।
शिंशपाबीजवत् तत्तत् स्फुरत्येव दिनत्रयात् ॥ २१

विषांशं गजबीजस्य सावित्रामृनपेषितम् ।
भस्मनारितनौ युञ्ज्यात् शुकमूलमथापि वा ॥ २२

स्फोटयत्यरिकायांशं [1]गुहकेतोः पुरीषकम् ।
क्षतांशं निम्नतां याति तैलमाधूकदर्शनात् ॥ २३

[2]गोवैरिचिबुकालोमशिरसा यः स्पृशेद्रिपुम् ।
तस्माज्जवात् रणं भूयात् असाध्यमखिलौषधैः ॥ २४

द्विवालजीवभ्रमतोयसिक्तं
भस्माभिमृद्याथ सहस्रवारम् ।
अरातिदेहे स रहः प्रयुञ्ज्यात्
चित्तभ्रमायाशु जलैर्विमोक्षः ॥ २५

भ्रमौषधिं चूर्ण्य सहस्रवारं
आमन्त्र्य मन्त्रेण विरोधिदेहे ।
मासभ्रमायाखिलगर्वशान्त्यै
निद्रावकाशे निशि वा प्रयुञ्ज्यात् ॥ २६

शुभाशुभज्ञानविहीनचित्तः
रसौदनास्वादनमात्रयोग्यः ।
भवेदरातिर्भुवि मासमात्रं
जम्बीरनीराञ्ज(ज)नतो विमोक्षः ॥ २७

---

1. कुक्कुटस्य 2. व्याघ्र

ताम्बूलान्तः प्रयुक्तं यत् भवेत्संवत्सरभ्रमम् ।
षाण्मासभ्रममाज्येन सितया मण्डलभ्रमम् ।। २८

क्रमुकक्रिमिमालोड्य दिव्यचूर्णेन योजितम् ।
प्रयुञ्ज्यात् सहताम्बूलं सद्यो मोहाय वैरिणाम् ।। २९

शान्तिस्वेदभ्रमाकम्पवान्तिवक्षस्थलव्यथाः ।
त्र्यक्षजास्वादनात्तेषां शान्तिमायान्ति तत्क्षणात् ।। ३०

[1]सूर्याम्भसा समालोड्य [2]कुम्भीवीजविषच्छदम् ।
खाने पानेऽथवा युञ्ज्यात् विषूच्यै निखिलद्विषाम् ।। ३१

[3]स्नुहिक्षीरेण संपिष्टं रक्तामिषविभेदनम् ।
तिलदुग्धेन संयुक्तं रिपूणां आन्त्रभेदनम् ।। ३२

महावाराहिबीजेन विषबीजरसं समम् ।
अर्धयामं समामर्द्य भरण्यां स्थाप्य मन्त्रितम् ।। ३३

सूपमात्रं समुद्धृत्य तिलतैलेन योजितम् ।
तत्तैलाभ्यञ्जनादेव भवेदव्याजपो(शो)षणम् ।। ३४

तैलसिक्तमशेषाङ्गं अर्धं वा कुत्रचित् स्थलम् ।
त्रिदिनात्प्लोषणं शत्रोः भविष्यति न संशयः ।। ३५

एतदेरण्डतैलेन योज्याभ्यक्तमरातिनः ।
उत्तमाङ्गे बहुस्फोटं भविष्यति दिनत्रयात् ।। ३६

---

1. எருக்கம்பால்   2. நேர்வாளம்   3. கள்ளிப்பால்

वृद्धिमभ्येत्यनुदिनं औषधैरनिवारितम् ।
गुञ्जामूलं यवाग्वायां[1] पक्त्वा स्नायात्प्रशान्तये ॥ ३७

स्फोटकं प्लोषणं वापि पक्षादूर्ध्वं न शाम्यति ।
तस्मात्त्रयोदशदिनादर्वाग् युञ्ज्यात्प्रशान्तये ॥ ३८

तिलत्वबीजं स्नुहीबीजं समं चूर्ण्यातिसूक्ष्मकम् ।
स्नानीयेन प्रयुञ्जीत दृशोस्तिमिरसिद्धये ॥ ३९

स्नानीयं स्नुहिदुग्धेन सप्तधा स्निग्धशोषितम् ।
प्रयुञ्ज्यादखिलारीणां लोमनाशाय मन्त्रवित् ॥ ४०

स्नुहिवृक्षस्थितं मूलं [2]निशाशुष्कं द्विपक्षतः ।
उद्धृत्य शोषयित्वा तन्निष्कमात्रं प्रयोजयेत् ॥ ४१

हरिद्रालेपनात्स्त्रीणां कण्डूवृद्धिर्भविष्यति ।
यदा हरिद्रया लेपः तदा कण्ड्वधिकं भवेत् ॥ ४२

बिम्बीमूलत्वगालेपात् शाम्यत्येव चतुर्दिनम् ।
सरहस्यं क्रमाद् ज्ञात्वा साधयेत् सर्वसिद्धये ॥ ४३

इति विविधगुणारिवर्गशान्ति-
प्रदमखिलविचित्रतन्त्रसूक्ष्मम् ।
शिवगुरुकृपया समीक्ष्य मन्त्री
जयति वितनोतु सर्वसिध्यै ॥ ४४

---

1, காடி, 2. முளிமஞ்சள்.

**शिव उवाच —**

पदमन्त्रं प्रवक्ष्यामि सद्यः सर्वार्थसिद्धये ।
विशेषाज्जीवलोकानां विविधापत्तिभञ्जनम् ॥ ४५

यथापूर्वं ऋषिश्छन्दः सा सा स्याद्देवता क्रमात् ।
यथापूर्वं बीजशक्ती फट्कारं कीलकं स्मृतम् ॥ ४६

कालोचितप्रयोगार्थसिध्यर्थे विनियुज्यते ।
*वेदाग्निवेदयूपाग्रमूलवर्णैः कराङ्गयोः ॥ ४७

*2 2 3 4 1 1 2*
रेखागोर्भिर्यकाराणैः पदमन्त्रोऽयमीरितः ।

(प्रथमं पदं द्व्यक्षरम् । द्वितीयं पदं अपि द्व्यक्षरम् । तृतीयपदं त्र्यक्षरम् । चतुर्थपदं चतुरक्षरम् । पञ्चमपदं एकं (हुं) । षष्ठपदं एकम् (फट्) । सप्तमपदं द्व्यक्षरम् (स्वाहा) इति पदक्रमः । क्रमेण देवतामाह शिवः —

१ ज्वल २ ज्वल ३ शूलिनि–दुष्टग्रह
आग्नेयमथ सावित्रं भौममाप्यमतःपरम् ।
हुं फट् स्वाहा
पौष्करं पावमान्यं च सौम्यं सप्तपदं स्मृतम् ॥

मनवः सप्तमूर्तीनां मूलं स्वात्ममनुः स्मृतः ॥ ४८

(एवं सप्तमूर्तीनां मूलं स्वात्ममनुरिति स्वात्मस्वरूपमिति यावत्)

---

* ज्वल ज्वल–शूलिनि–दुष्टग्रह–हुं–फट्–स्वाहा इति मन्त्रभागैः कराङ्गन्यासाः विधेयाः ॥

भूतोयाग्न्यनिलाकाशसूर्यचन्द्रपसां क्रमात् ।
तत्तत्पदादिमन्त्राः स्युः शस्ताः सर्वेषु कर्मसु ।। ४९

(पृथिवी – आपः, तेजः, वायुः, आकाशं, सूर्यः, चन्द्रः. इति क्रमेग देवताः । तत्तत्पदादिमन्त्राः सर्वकर्मसु शक्ताः प्रशस्ताः ।।)

*3 4 1 6 5 2 7*
लोभाकचामरान्ता(था)द्याः सप्तधा मनवः स्मृताः ।
शूलिन्याः सप्तमूर्तीनां *जलाद्यात्ममनुर्हितैः ।। ५०

भारत्याद्याश्च कूटार्णाः संयुक्तार्णा विवर्णकाः ।
प्रयुक्ता मूलमन्त्रादौ हितवर्णः प्रकीर्तितः ।। ५१

[[1] भूः – शूलिनि । [2] अप् – दुष्टग्रह । [3] तेजः – ज्वल । [4] वायुः – फट् । [5] आकाशं – हुं । [6] सूर्यः – ज्वल । [7] चन्द्रः – स्वाहा । एवं क्रमेण पञ्चभूतमन्त्रः ।]

स्तम्भने सर्वरक्षायां महीमूर्तिः प्रशस्यते ।
अभिषेके तोयमूर्तिरग्निमूर्तिस्तु दाहने ।। ५२

उच्चाटे वायुमूर्तिः स्याद्व्योममूर्तिर्विनिग्रहे ।
क्षुद्ररोगार्तिशमने सूर्यमूर्तिर्विशेषतः (विशिष्यते) ।। ५३

सोममूर्तिर्महातापविषभेदोपशान्तये ।
अनुग्रहे तु सर्वत्र मूलमन्त्रः प्रशस्यते ।
एतेषामवरोहस्तु विशेषो(विविधो)पद्रवप्रदः ।। ५४

---

* जले(ज्वले)त्यात्ममनुं हितैः ।।

तत्तत्पादादयो मन्त्राः क्रमात्तत्तदनुग्रहाः ।
पादानां व्यत्ययेनैव, विश्वसिद्धिप्रदो मनुः ।। ५५

तस्माद् व्यत्ययभेदानि यन्त्रेषु विलिखेत्तथा ।
विनियोगपदमन्त्रानाह –
क्ष्मावह्नितोयपवनसूर्यखेन्दुक्रमो मनुः ।। ५६

गर्भार्तिशान्तये गर्भवृध्यै भ्रूननिवृत्तये ।
अग्निभूभानुसलिलव्योमानिलशशिक्रमः ।। ५७

समस्तक्षुद्ररोगारिमृत्युपापप्रशान्तिदः ।
भूव्योमाग्न्यहरीशांबुवायुचन्द्रक्रमो मनुः ।। ५८

रक्षोग्रहाभिचारादिक्षुद्रासाध्यग्रहापहः ।
तनूनपादिनव्योमतोयवायुमहीन्दवः ।। ५९

संहारोच्चाटको मन्त्रः सर्वारिष्टनिवर्तकः ।
जलानिलमहीसूर्यव्योमानि(न)ल निशाधिपाः ।।

भूतरोगादिशमनः पुत्रदो भर्तृवश्यदः ।
चन्द्रावनिर्दिनेशाग्निजीवनव्योममारुतः ।। ६१

भोगभोग्यवशीकारवृद्धिसिद्धिसुतप्रदः ।
* लोपामुद्रान्वितः सार्णो निधिग्रहणसिद्धिदः ।।

---

* लो 3 पा 1 मु 5 द्रा 2 न्वि 4 त 6 स 7 ज्वल शूलिनि हुं दुष्टग्रह फट् स्वाहा ज्वल इति मन्त्रभेदः निधिग्रहणसिद्धिप्रदः भवति ।। एवमुत्तरत्रापि ज्ञेयम् ।।

| | | |
|---|---|---|
| गोरावतमयः सार्णः सर्वसञ्जीवनो मनुः । | 3 2 4 6 5 1 7 | |
| लोमरावतया सार्णो विवादविजयाय वै ॥ | 3 5 2 4 6 1 7 | ६३ |
| लोकचामरभासार्णो मनुर्वैरिकुलापहः । | 3 1 6 5 2 4 7 | |
| त्रिसोपेतरमावर्णः स्वेष्टस्वप्नफलप्रदः ॥ | 3 7 1 6 2 5 4 | ६४ |
| गम्भीरतापमासार्णस्त्रैलोक्यविजयप्रदः । | 3 4 2 6 1 5 7 | |
| लोकाम्भसाचरामार्णो विश्वभेषजसिद्धिदः ॥ | 3 1 4 7 6 2 5 | ६५ |
| तीरवालुकमासार्णः पञ्चबाधाविवर्धनः । | 6 2 4 3 1 5 7 | |
| तामसालोकरम्भार्णः सर्वशल्यनिवर्तकः ॥ | 6 5 7 3 1 2 4 | ६६ |
| चकारभागमासार्णः सकलद्वेषसिद्धिदः । | 6 1 2 4 3 5 7 | |
| चरमालयवासार्णो विश्वाज्ञासिद्धिवर्धनः ॥ | 6 2 5 3 1 4 7 | ६७ |
| पलाशरावतंसार्णो विश्वाश्चर्यफलावहः । | 1 3 5 2 4 6 7 | |
| कालमासाश्वभावार्णो भूतबाधानिवर्तकः ॥ | 1 3 5 7 2 4 6 | ६८ |
| कविसालचरामार्णो रोगबाधानिवर्तकः । | 1 4 7 3 6 2 5 | |
| कामारिचलसंघार्णश्चोरबाधानिवर्तकः ॥ | 1 5 2 6 3 7 4 | ६९ |
| रम्भाचयाङ्गमासार्णो राजबाधानिवर्तकः । | 2 4 6 1 3 5 7 | |
| रामाङ्कभासगीतार्णः सर्वरक्षाकरः स्मृतः ॥ | 2 5 1 4 7 3 6 | ७० |
| रोषाङ्गसूर्यवामार्णः कन्याकुचविवर्धनः । | 2 6 3 7 1 4 5 | |
| रसमूलकचाभार्णः कन्याभोगविवर्धनः ॥ | 2 7 5 3 1 6 4 | ७१ |
| गोमान्सरावतोयार्णो भर्तृचित्तवशङ्करः । | 3 5 7 2 4 6 1 | |
| गीतारामायवासार्णः श्वशुरादिवशङ्करः ॥ | 3 6 2 5 1 4 7 | ७२ |

गोसभा(माङ्कु)यमरक्तार्णो विश्वस्नेहविवर्धनः । 3 7 4 1 5 2 6
गयाचभारसामार्णः सर्वैश्वर्यविवर्धनः । 3 1 6 4 2 7 5
गोकुचाभोरसाशार्णः सपत्नीविजयप्रदः ॥ 3 1 6 4 2 7 5 ७३

भूतपालमिथः खार्णो विश्वकोपविनाशनः । 4 6 1 3 5 7 2
वासाङ्गशरचापार्णः सर्वैश्वर्यविवर्धनः ॥ 4 7 3 5 2 6 1 ७४

भूकामरतिगोसार्णः गर्भवृद्धिप्रदायकः । 4 1 5 2 6 3 7
वीरसोमाङ्कलूतार्णो गर्भस्तम्भकरः स्मृतः ॥ 4 2 7 5 1 1 6 ७५

मासारिवातकालार्णः क्षीणगर्भविवर्धनः । 5 7 2 4 6 1 3
मायाम्भसागतारार्णो गर्भबाधानिवर्तकः ॥ 5 1 4 7 3 6 2 ६७

मा(र)याताालसभारा(का)र्णो जन्मकाकाघमोचकः । 5 1 6 3 7 4 2
मूलकोचवरामार्णः वन्ध्याजन्ममृताघहृः ॥ 5 3 1 6 4 2 7 ७७

तापाग्निमासरेवार्णः काकजन्माघशान्तिदः । 6 1 3 5 7 2 4
तीरमापवसङ्गार्णः काककाकाघमोचकः ॥ 6 2 5 1 4 7 3 ७८

तिलसेवायमारार्णः काकाख्यमृतदोषजित् । 6 3 7 4 1 5 2
स्तम्भारिसमलङ्कार्णः मृतजन्माघनाशनः ॥ 6 4 2 7 5 3 1 ७९

सिरावीतकलामार्णः लोकप्रीतिविवर्धनः । 7 2 4 6 1 3 5
सङ्गतारिमयाभार्णो वन्ध्यामृतमृताघनुत् ॥ 7 3 6 2 5 1 4 ८०

सभाकामरताङ्गार्णः सर्वदुःस्वप्नशान्तिकृत् । 7 4 1 6 2 6 3
समलङ्कृतवीरार्णः लोकप्रीतिविवर्धनः ॥ 7 5 3 1 6 4 2 ८१

कलिरामाम्भसातार्णः प्रजादेहविवर्धनः । 1 3 2 5 4 7 6
खगीतमयासार्णो बालकांतिनिवर्तकः ॥ 2 4 3 6 5 1 7 ८२

लोमवासितराकार्णो लोकप्रीतिविवर्धनः । 3 5 4 7 6 2 1
वीतमायसुबेरार्णः विश्वभ्रमणकारकः ।। 4 6 5 1 7 3 2 ८३

मांसतारकवालार्णो विविधापत्तिभञ्जनः । 5 7 6 2 1 4 3
स्तोभसागरमायार्णः सर्वशान्तिकरः स्मृतः । 6 4 7 3 2 5 1 ८४

सारगम्भार्कचमर्णिः स्वप्रयोगवलप्रदः । 7 2 3 4 1 6 5
कविगोत्रसुतामर्णः त्रैलोक्यक्षुद्रनाशनः ।। 1 4 3 2 7 6 5 ८५

रमावालकसीतार्णः सर्वप्रेरकसिद्धिदः । 2 5 4 3 1 7 6
वीतमाबरकासार्णः प्रतिवैद्यत्रलापहः ।। 4 6 5 3 2 1 7 ८६

भासितामारबोयार्णः स्वप्रयोगफलप्रदः । 4 7 6 5 2 3 1
मायासीतावलारार्णः शास्त्राद्यगुणचोदनः । 5 1 7 6 4 3 2 ८७

तीरकेसमभङ्गार्णः[1] सर्वचित्रविचित्रदः । 6 2 1 7 5 4 3
सालरायतमाभार्गः सर्वग्रसनसिद्धिद.[2] ।। 7 3 2 1 6 5 4 ८८

कामवेगरतासार्गः सर्वसङ्क्षोभसिद्धिदः । 1 5 4 3 2 6 7
रतीशभोगसायार्णो ब्रह्मरक्षोविमोक्षदः ।। 2 6 5 4 3 7 1 ८९

लासितामोघपूरार्णः क्रियोत्कर्षफलप्रदः । 3 7 6 5 4 1 2
वियत्सितेशरागार्णः विश्वक्षोभनिवारणः ।। 4 1 7 6 5 2 3 ९०

मारायाथाचलाभार्णो विविधद्वेषसिद्धिदः । 5 2 1 7 6 3 4
तैलरायसभीमार्णो विमतद्रव्यनाशनः ।। 6 3 2 1 7 4 5 ९१

---

1. तीरकं समभागार्णः ।  2. सर्वग्रहणसिद्धिदः ।

| | | |
|---|---|---|
| सभागोरूपभेपार्णः प्रतिवादिभयापहः । | 7 4 3 2 1 5 6 | |
| यस्तोमभोगरंसार्णः मायाकरणसिद्धिदः* ॥ | 1 6 5 4 3 2 7 | ९२ |
| लङ्कासीतेशवीरार्णः नाडीभेदनसिद्धिदः । | 3 1 7 6 5 4 2 | |
| भारायासतमालार्ण एकाङ्गविकलप्रदः ॥ | 4 2 1 7 6 5 3 | ९३ |
| मूलराकासुताभार्णो वीर्यसिद्धिविवर्धनः । | 5 3 2 1 7 6 4 | |
| स्तम्भगोरकसोमार्णः प्रतिमाव्याजसिद्धिदः ॥ | 6 4 3 2 1 7 5 | ९४ |
| सोमभङ्गोरिकोचार्णः गोगजाश्वादिवृद्धिदः । | 7 5 4 3 2 1 6 | |
| योलाभमोचसारार्णः शत्रुहृत्सूक्ष्मनाशनः ॥ | 1 3 4 5 6 7 2 | ९५ |
| यवमाषसुरेगार्णः शत्रुदर्पनिवर्तकः । | 1 4 5 6 7 2 3 | |
| कुमेषरसगुम्भार्णः शत्रुबुद्धिविनाशनः ॥ | 1 5 6 2 7 3 4 | ९६ |
| युक्तासारगभीमार्णो विश्वाकृतिविभेदनः । | 1 6 7 2 3 4 5 | |
| कंसरागविमोचार्णः सर्वसिद्धिविवर्धनः ॥ | 1 7 2 3 4 5 6 | ९७ |
| रागाङ्कभीमतुच्छार्णः स्पर्शसूक्ष्मविनाशनः । | 2 3 1 4 5 6 7 | |
| रसगोभीमतङ्कार्णो नेत्रसूक्ष्मनिवर्तकः ॥ | 2 7 3 4 5 6 1 | ९८ |
| रतिलाभमयासार्णः शब्दज्ञाननिवर्तकः । | 2 6 3 4 5 1 7 | |
| रामलाभायसीतार्णो महावर्षविवर्धनः ॥ | 2 5 3 4 1 7 6 | ९९ |
| लसद्भीमस्तुराकार्णो विश्वसत्वविवर्धनः । | 3 7 4 5 6 2 1 | |
| लूतभीमारिकासार्णो विविधाखिलापहः ॥ | 3 6 4 5 2 1 7 | १०० |
| वियत्सूतेशगोरार्णः खड्गखेटविवादजित् । | 4 1 7 6 5 3 2 | |
| वासितोमूलराकार्णः कुन्तायुधविवादजित् ॥ | 4 7 6 5 3 2 1 | |

---

* प्राणवृद्धिप्रदायकः

मारकस्सुतवालार्णः प्रतिपक्षविनाशनः । 5 2 1 7 6 4 3
मूकसूताघवेरार्णो मृगभेदविवादजित् ।। 5 1 7 6 4 3 2 १०२

तूलरेकसमाभार्णो दुःसाधदुरितापहः । 6 3 2 1 7 5 4
मारिकस्थितभागार्णः परसेनार्तिवृद्धिदः ।। 5 2 1 7 6 4 3 १०३

तारकःसामभोगार्णः स्वसेनाबलवर्धनः । 6 2 1 7 5 4 3
समभागारोपितार्णो गृहक्षेत्रविवर्धनः ।। 7 5 4 3 2 1 6 १०४

सावेरकतमाभार्णोऽभीष्टग्रसनसिद्धिदः । 7 3 2 1 6 5 4
एवमेव समस्तानां (म)यन्त्राणां सिद्धिवृद्धये ।। १०५

**यन्त्राणां ऋचः**

" ब्रह्मणाग्निः संविदानः : अग्निष्टं ब्रह्माणासह + " यस्त ऊरू विहरत्यन्तरा + यस्त्वा भ्राता पतिर्भूत्वा + " "यस्त्वा स्वप्ने तमसा मोहयित्वा + " "सम्राज्ञी श्वशुरे भव" सम्राज्ञी श्वश्र्वां भव । ननान्दरि सम्राज्ञी भव, "सम्राज्ञी अधि देवृषु" इति वेदाहीन्द्रमही गृहे । 'सं' पदं विना यन्त्रे लेखनीयम् ।। [राज्ञी श्वशुरे भवेति] ।।

एवमेव समस्तानां यन्त्राणां सिद्धिवृद्धये ।
क्रमेणैवाष्टनवतिपदमन्त्राः समीरिताः ।। १०७

सावधानेन वै तस्मात् सकलं गुरुवक्त्रतः ।
ज्ञात्वा तिलक्रियासिध्यै साधयेत् साधकोत्तमः ।। १०८

अशेषाणि प्रयोगाणि सिध्यन्ति विविधानि च ।
शूलिन्यमोघफलदा भवत्येव न संशयः ।। १०९

आग्नेयमथ सावित्रं भौममाप्यमतः परम् ।
पौष्करं पावमान्यं च सौम्यं सप्तपदं स्मृतम् ।। ११०

सप्तानां पदमन्त्राणां सप्तभेदक्रमः स्मृतः ।
व्युत्क्रमात्सप्तधा भेदाः तथाऽष्टनवतिः स्मृतः ।। १११

भूवायुसलिलव्योमपावकार्कनिशाधिपाः ।
भूतोयव्योमपवनसूर्यवैश्वानरेन्दवः ।। ११२

भूसूर्याग्निजलव्योमपवमानेन्दवस्तथा ।
भूम्यर्कजलखादित्यपावकानिलचन्द्रकाः ।। ११३

भूवह्नितोयपवनसूर्याकाशनिशाकराः ।
भूतोयेन्द्वर्कपवनपावकाकाशवर्णकाः ।। ११४

भूसोमाग्न्यर्ककीलालगगनानिलवर्णकाः ।
तोयानिलमहीवह्निदिनेशाकाशसोमकाः ।। ११५

सलिलाकाशपवनसूर्यभूम्यग्निसोमकाः ।
सलिलव्योमसोमाग्निवसुधादित्यवायवः ।। ११६

अमृतेन्दुदिवानाथक्ष्मानलानिलपुष्कराः ।
अमृतानिलसूर्येन्दुकाश्यपीगगनानिलाः ।। ११७

तोयावनिदिशेशाग्निसुरवर्त्मानिलेन्दवः ।
तोयाग्निवसुधार्केन्दुसुरवर्त्मानिलाह्वयाः ।। ११८

एवं हि सप्तमूर्तिनां मन्त्राणां व्यत्यया: क्रमात् ।
असङ्ख्यातप्रभेदाः स्युः सिद्धयो विविधास्तथा ।। ११९

मूर्त्यर्णव्यत्ययेनैव विविधा मनवः स्मृताः ।
पृथक् पृथगशेषाणां विविधाः सिद्धयः स्मृताः ।। १२०

नालं वक्तुं प्रयोगाणि कल्पकोटिशतैरपि ।
दुर्लभाः साधकास्तत्र सन्ति केचिदकल्मषाः ।। १२१

तस्मादशेषकर्माणि तत्तकर्मोचितानि वै ।
यः साधयति मन्त्रात्मा लभेत्सिद्धिमनुत्तमाम् ।। १२२

एवं पदव्यत्ययभेदयोग-
मन्त्राणि नानाविधसिद्धिदानि ।
ज्ञात्वा निजाचार्यमुखारविन्दात्
प्रसादयेदाफलं इष्टसिध्यै ।। १२३

ततो 'ज्व'काराद्यखिलाक्षराणां
लिपिक्रमाद् व्युत्क्रमतस्तथैव ।
विमिश्रभेदान्मनवो मठाख
सङ्ख्या विचित्राखिलसिद्धिदाः स्युः ।। १२४

द्विशतद्विदशाधिपञ्चसङ्ख्या
मनवो विश्वहिताय भक्तिभाजाम् ।
विविधप्रबलप्रकाररूपाः
कथिताः प्रौढकलाविशेषसिध्यै ।। १२५

पाडयादिपूर्णमास्यान्तं वर्णमन्त्रस्य भेदतः ।
स्वेच्छातिथ्यर्णमुखतो जपेत् विविधसिद्धये ।। १२६

प्रथमादिक्रमेणैव मन्त्राः पञ्चदश स्मृताः ।
कर्मारम्भणतिथ्यादि शस्तं तत्कर्मसिद्धये ॥ १२७

क्रमेण क्लृप्तदिसं तत्तत्तिथ्यर्णपूर्वकम् ।
तिथिमन्त्रं जपेन्मन्त्री तत्तत्कर्मार्थसिद्धये ॥ १२८

क्रमादनुग्रहो मन्त्रो व्युत्क्रमो निग्रहःस्मृतः ।
व्यत्ययस्त्वेतयोरन्यन्नानाकर्मणि शस्यते ॥ १२९

त्रिपञ्चतिथयः प्रोक्ता नन्दाद्यास्त्रिविधास्तथा ।
आदिमध्यावसानानां व्युत्क्रमव्यत्ययक्रमात् ॥ १३०

सन्तानाय श्रियै पुष्टचै तुष्टचै नन्दादिको मनुः ।
सर्वोपाधिप्रशमने द्वेषशान्त्यै सुखाप्तये ॥ १३१

सामरस्याय सर्वेषां भद्राद्याः परिकीर्तिताः ।
विजयायाखिलारीणां मृत्युपापगदात्मनाम् ॥ १३२

जयाद्या मनवः शस्ताः वैश्वानरजयाय च ।
स्तम्भविद्वेषमोहाय सर्वसत्वक्षयाय च ॥ १३३

सर्वस्वनाशनेऽरीणां रिक्ताद्या मनवः स्मृताः ।
प्रीतये सर्वरक्षायै सर्वाधिकफलाप्तये ॥ १३४

सर्वसाम्राज्यगुप्त्यै च पूर्णाख्याः (द्याः) परिकीर्तिताः ।
धर्मार्थकामकरणेष्वादिमध्यान्तखण्डतः ॥ १३५

आरभ्य साधयेन्मन्त्रं तत्तदिष्टार्थसिद्धये ।
पञ्चधार्णत्रिखण्डस्य व्यत्यया बहवः स्मृताः ॥ १३६

पृथक्सारात्साररतराः पञ्चविंशत्प्रकीर्तिताः ।
त्रिधाद्विमिश्रभेदस्य पञ्चत्रिंशत्पृथक्पृथक् ॥ १३७

त्रिखण्डसंमिश्र(श्रित)स्य मनवःपञ्चविंशकाः ।
सप्तधा पञ्चविंशस्य पञ्चसप्तत्रयः शतात् ॥ १३८

पातादिसप्तधाभेदगुणरूपस्य कर्मणः ।
तत्तदादिक्रमेणैव साधयेत्सर्वसिद्धये ॥ १३९

नन्दा जया तथा पूर्णा भद्रा रिक्ता त्रिभेदतः ।
धर्मार्थकामकरणे साधयेदादितः क्रमात् ॥ १४०

सम्पत्तौ सकलोत्पत्तौ तृप्तौ चैवारिनाशने ।
पञ्चस्वाद्यादयो मन्त्राः प्रशस्ताः स्युः स्थिरात्मनाम् ॥ १४१

नन्दा रिक्ता तथा भद्रा पूर्णा चैव जया क्रमात् ।
शव्दगन्धरसस्पर्शरूपाकृष्टौ क्रमात्स्मृताः ॥ १४२

नन्दा पूर्णा तथा रिक्ता जया भद्राक्षरक्रमात् ।
सारस्वते फलावाप्तिरुच्चाटे मोक्षतोषयोः ॥ १४३

नन्दा जया तथा भद्रा पूर्णा रिक्तार्णतः क्रमात् ।
विवाहे ऋणमुक्तौ च प्लावे भेदभ्रमाख्ययोः ॥ १४४

नन्दा भद्रा जया पूर्णा रिक्तादिमनवः स्मृताः ।
तरणे सङ्क्रमे तोदे स्फोटे विवशकर्मणि ॥ ?४५

नन्दा रिक्ता जया भद्रा गोगजाश्वानुगा स्त्रियाम् ।
अभिवृद्धौ क्रमान्मन्त्राः साधनीयाः स्थिरात्मभिः ॥ १४६

नन्दा पूर्णा जया रिक्ता भद्रा क्षोभाय पीडने ।
रेचने वमने श्वासे प्रशस्ताः स्युर्मनूत्तमाः ॥ १४७

एवमस्य मनोर्वर्णव्यत्ययानन्तभेदतः ।
असङ्ख्या मनवस्तेषां प्रयोगाश्च तथा स्मृताः ॥ १४८

एवं मनोः पदार्णानां व्यत्ययव्युत्क्रमक्रमाः ।
कथिताः साधकेन्द्राणां हितायाखिलसिद्धये ॥ १४९

विश्वेक्षणायाः परदेवतायाः
प्रयोगमन्त्रान् विधिवत्क्रमेण ।
ज्ञात्वा शिवाचार्यमुखारविन्दात्
प्रसाधयेदिष्टफलाभिवृध्यै ॥ १५०

यस्य यस्य प्रयोगस्य यो यो मन्त्रः प्रकीर्तितः ।
तेन तेन लभेत्सिद्धिं नान्यथा यत्नकोटिभिः ॥ १५१

**शिव उवाच —**

संवर्तानलकोटिकोटिविलसत्तेजोमहाभीषणां
वीराभिः परिवारिताभिरभितो वीरैर्ग्रसद्दिक्चयाम् ।
नानामूर्तिमहाप्रयोगनिपुणद्विड्भिः प्रयुक्तैः पुन-
स्तानेवाशु विनाशिनीं भयहरां ध्यायेन्महाशूलिनीम् ॥ १५२

ह्रौं द्रें अरिदुरितमोचनीरूपेण ज्वल ज्वल प्रतिक्रियाशूलिनि ग्रासयाशु प्रयोक्तॄन् हुं फट् स्वाहा-

सर्वसमुदायत्रिसाध्यमन्त्रप्रकारः –

तत्तद्विशेषयन्द्रप्रधानबींजमादौ; ततः अभीष्टदेवताव्याजरूपेण मनोर्वह्निपदं सूर्यपदं च ततः संहारादिपृथिवीपदं ततः दुष्टग्रह-स्थाने साध्यनाम आकाशवायुचन्द्राणां पदम् । — [उदाहरणतया ओं ह्रीं श्रीकालीरूपेण ज्वल ज्वल संहारशूलिनि साध्यनाम हुं फट् स्वाहा इति – एवं ह्रीं क्षं प्रत्यङ्गिरारूपेण ज्वल ज्वल संहारशूलिनि साध्यनाम – हुं फट् स्वाहा इत्यादि ।।]

आवाहनविद्दै (प्रकारः) –

शाध्यप्राणा इह प्राणाः साध्यजीव इह स्थितः । साध्य सर्वेन्द्रियकायवाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणा इष्टगणग्रस्ताः सन्तः इष्टकाला(या)त् इष्टं यान्तु स्वाहा ।।

शान्तिमन्त्रः – इष्टगणमुक्ताः सुखं चिरं तिष्ठन्तु स्वाहा ।

श्रीशिव उवाच –

ध्यानभेदं प्रवक्ष्यामि शूलिन्याः सर्वसिद्धये ।
साधकानामशेषाणां सर्वाभीष्टार्थसिद्धये ।। १५३

मूलश्रीभैरवात्मत्रिविधपदमहादेवताभिः परीते
दिव्ये सिंहासनेन्द्रे स्थितमखिलकला बोधिकां देशिकेशीम् ।
तस्याङ्के सन्निषण्णामरुणरुचिचयाऽऽरञ्जिताशान्तरालां
देवींमानन्दपूर्णां अमृतकरतलामाश्रयेऽभीष्टसिद्ध्यै ।। १५४

---

* बोधकं देशिकेन्द्रम् ।

कल्पान्तानलकोटिकोटिसदृशां दिव्यं त्रिशूलायुधं
पाणिभ्यां परिगृह्य पञ्चवदनस्कन्धेऽधिरुह्य स्थिताम् ।
विश्वाशावृतवीरशक्तिविविधक्रीडाविशेषारव-
त्रस्तक्षुद्रसमस्तशत्रुनिवहां ध्यायेन्महाशूलिनीम् ॥ १५५

नीलेन्दीवरसन्निभाङ्गलतिकां पूर्णेन्दुबिम्बाननां
शङ्खारीक्षुशरासपाणिकमलां कण्ठीरवाध्यासिनीम् ।
नित्याव्याजकटाक्षवीक्षणसुधाधाराभिषिक्ताखिलां
क्षामक्षोभविमोचनीं शिवसखीं ध्यायेत् महाशूलिनीम् ॥ १५६

उद्यत्कोटिसहस्रभास्करजपाबन्धूकपुष्पप्रभां
कल्हारोज्ज्वलनीलकुन्तललसच्छीतांशुरेखां पराम् ।
भृङ्गाविद्धमधूकपक्वकुसुमस्रग्भासितोद्यत्कटां
कल्याणोद्यतशम्भुसम्भ्रमकरीं ध्यायेन्महाशूलिनीम् ॥ १५७

विद्युद्दामसहस्रकोटिसदृशां हर्यक्षलक्ष्यासनां
शूराभिः कुलिशायुधाभिरभितः ताक्ष्यासनाभिर्वृताम् ।
कल्पान्तोदितचण्डभास्करदृशा निर्दग्धसर्पान्वयां
जीवं चेन्दुसुधाकरैः कलयतीं ध्यायेन्महाशूलिनीम् ॥ १५८

ध्यायेत्कुन्दतुषारहारशशभृत्शङ्खप्रभाभासुरां
भ्राजत्पुस्तकलेखनीं जपवटीपीयूषकुम्भान् (म्भौ) करैः ।
बिभ्राणां वरदाभयाभिरभितः कन्याभिरासेवितां
देवीं विश्वविबोधिनीं सकरुणां सिंहासनां शूलिनीम् ॥ १५९

उद्यत्कोटिसहस्रपूर्णशशभृच्छोभां प्रसन्नेक्षणां
दोषग्रस्तनिजोपलाङ्गगलितप्रौढप्रवाहामृतैः ।
रोगक्षुद्रविषज्वरोत्थितमहातापं व्यपोह्य क्षणात्
आयुःकान्तिशरीरवर्धनकरीं ध्यायेन्महाशूलिनीम् ॥ १६०

विजितपवनवेगं मेघनीलं तुरङ्गं
सपदि समधिरुह्य प्रेत्य सप्तावभानम् ।
तटिदुपमकृपाणं बिभ्रतीं विश्ववन्द्यां
प्रणत(प्रमद)विमतहन्त्रीं शूलिनीं भावयामि ॥ १६१

तप्तस्वर्णनिभाम्बरां नवजपाबन्धूकपुष्पारुणां
आकृष्यैक्षवकार्मुकं सरभसं सन्धाय पञ्चाशुगम् ।
मुञ्चन्तीं करुणामृतार्द्रनयनां विश्वैकसम्मोहिनीं
वश्याद्यष्टविमोहनैकनिरतां श्रीशूलिनीं भावयेत् ॥ १६२

[वश्यं स्मरणमुत्साहं व्यञ्जनं मोहनद्रवम् ।
अनुभूतिर्लयश्चैव वश्याद्यष्टविमोहनम् ॥]

श्यामां कुङ्कुमपङ्किलारुणकुचां कौसुम्भवर्णाम्बरां
हस्ते खेटगदाब्जकार्मुकशरारित्रोटखड्गायुधान्(धम्) ।
बिभ्राणां समवीरशक्तिविहृतिप्रक्षोभिताशाखिलां
देवीं वैरिमदापहां भयहरां श्रीशूलिनीं भावये (त्) ॥ १६४

श्यामां पञ्चमुखासनां त्रिणयनां मूर्धोज्ज्वलत्कुन्तलाँ
कालव्यालविभूषणां परिपतद्दंष्ट्रानानां भीषणाम् ।
कोपप्रस्फुरिताधरां विवलितग्रीवामसह्यारवां
देवीं भक्तविरुद्धलोकमथिनीं श्रीशूलिनीं भावये(त्) ॥ १६५

हेमाभां अभयासिपाशमुसलप्रोद्यत्‌त्रिशूलायुध-

दीप्तात्युग्रहलाब्जकुन्तशरधृक्पात्रामृतैः शोभिताम् ।

विश्वान्तर्विमतोद्धतारिपिशितग्रासत्वरासृक्स्विणीं

विश्वेशीं नखरायुधेन्द्रनिलयां ध्यायेन्महाशूलिनीम् ।। १६६

भासा कुन्दशशाङ्कशङ्खसदृशां कण्ठीरवाध्यासिनीं

कोदण्डेषुकपालपुस्तकजपास्रक्शूलदानाभयाम् ।

सर्वेशीं निखिलाघसङ्घशमनीं भक्तानुकम्पापरां

देवीं विश्वमनोरथैकवरदां ध्यायेन्महाशूलिनीम् ।। १६७

रक्तां वक्त्रकराङ्घ्रिभिः स्मितनखैः श्वेतां कचावीक्षणैः

कृष्णां ग्रीवभुजद्वयाम्बरकुचैः हेमां स्फुरत्कङ्कणैः ।

श्यामां सोमविभूषणां मृगपतिस्कन्धाधिरूढां परां

देवीं इष्टवरप्रदाननिरतां श्रीशूलिनीं भवये(त्) ।। १६८

श्यामां क्षौमवराम्बरां मृगपतिस्कन्धे निबद्धासनां

हस्तैः पाशकृपाणबाणशरधृक्खेटाङ्कुशान् बिभ्रतीम् ।

नानावीरविशेषशक्तिदहनध्वस्तारितूलां शिवां

विश्वत्राणपरायणां सकरुणां ध्यायेन्महाशूलिनीम् ।। १६९

मेघश्यामलकोमलां स्मितमुखीं सिंह्यासनां शङ्करीं

चापज्योद्गतवारुणास्त्रगलितैरापूरिताशाष्टकैः ।

तोयैर्भक्तविरुद्धसैन्यनिवहं संस्तम्भयित्वा वशं

विश्वाकारनिजावनं विदधतीं ध्यायेन्महाशूलिनीम् ।। १७०

पञ्चास्यासनसंस्थितां फणिफणारत्नावलीभासुरा-
ऽलङ्काराङ्कितनीलदेहलतिकां विश्वैकशिक्षाकराम् ।
हस्ताब्जस्थमहाङ्कुशाग्रवलितद्विड्देहनाडीगतिं
सर्वातीतपराक्रमां परशिवां ध्यायेन्महाशूलिनीम् ॥ १७१

सर्वाकारचिदात्मिकां सकरुणां सिह्मासनां भैरवीं
नागाभीतिवरानलान्वितकरां आग्नेयमूर्तिं निजाम् ।
उत्पाद्याखिलवैरिलोकमभितः प्रज्वालयन्तीं जगत्
शिक्षानुग्रहरक्षणैकहृदयां ध्यायेन्महाशूलिनीम् ॥ १७२

आत्मीयस्थिरजङ्गमाङ्गभरणप्रादुर्भवद्वह्निना
विश्वारातिमनश्शरीरवचसां मार्गान् निरुध्य क्षणात् ।
भक्ताभीष्टवरप्रदाननिरतां दिव्यैर्गुणैः संवृतां
देवीं भैरववामपक्षनिलयां ध्यायेन्महाशूलिनीम् ॥ १७३

विश्वाक्रान्ततमोवृताक्षकलुषप्रख्यामथाप्यर्थनात्
त्यक्त्वा दुस्तरचित्रशक्तिमतुलक्षुद्राशयक्षोभिणीम् ।
उद्यत्कालखरांशुकोग्रकणधृक्तेजोवरग्रासिनीं
विश्वेशीं शरणार्थिशत्रुशमनीं ध्यायेन्महाशूलिनीम् ॥ १७४

आरुह्य सिह्मसिखेटरथाङ्गशङ्ख-
चापेक्षुशूलवरदाभयपाशहस्ताम् ।
पर्यग्रतस्सकलवैरिमदापहाय
गच्छानिशं विजयशूलिनि विश्वभूत्यै ॥ १७५

विश्वज्योतिःप्रकाशे विविधतनुमये विश्वहृत्पद्महासे
विश्वव्यापारभेदानुगुणविधिकरे विश्वशिक्षैकदक्षे ।
विश्वद्रोहं क्षमस्वाऽखिलविधदुरितं नाशयस्वाशु शश्वत्
त्राहि श्रींशूलिनीशे सहजकरुणया सन्ततं सन्निधेहि ।।

इति श्रीमहाशैवतन्त्रे दुर्गाविश्वचालनविधाने (ध्यानभेद) मलिनीकरण, पदमन्त्रविवरण ध्यानभेदादिकथनं नाम चतुर्दशोपदेशः ॥



ध्यायेद् हेमसमोपला[समुज्ज्वला]सनवरे कन्याजनालङ्कृते
पञ्चब्रह्ममुखामरैर्मुनिवरैः सेव्ये जगन्मङ्गले ।
आसीनां स्मितभाषिणीं शिवसखीं कल्याणवेषोज्ज्वलां
भक्ताभीष्टवरप्रदाननिपुणां विश्वात्मिकां शूलिनीम् ।। १

श्रीदेव्युवाच –

सर्वज्ञ नाथाखिलात्मन् सर्वसूक्ष्मैकबोधक ।
क्रियाकालविधानस्य रहस्यं वक्तुमर्हसि ।। २

श्रीशिव उवाच –

साधु साधु प्रिये देवि सर्वलोकहितैषिणि ।
तव स्नेहात्प्रवक्ष्यामि क्रियाकालस्य सूक्ष्मिकाम् ।। ३

गुह्याद्गुह्यतरं दिव्यं गोपनीयं विशेषतः ।
सुसूक्ष्मं श्रूयतां तस्मात् सावधानेन चेतसा ।। ४

न दर्शयेदशेषाणां विशेषान्मृष्ट(मूढ)दुष्टयोः ।
दर्शयेन्नित्यशुद्धानां साधकानां स्थिरात्मनाम् ।। ५

मासपक्षतिथिवारतारका–
योगलग्नग्रहचारलक्षणैः ।
कालसूक्ष्ममवलोक्य बुद्धिमान्
साधयेदखिलकामसिद्धये ।। ६

[वृषझषहरितौलिकालिकुम्भे-
ष्वतुलफलाय जुहोतु मित्रमासे ।
कलयतु सुशुभं तदन्यमासे-
ष्वशुभकरं करोतु वैरिमासे ।।] ७

शुक्लपक्षः शुभोद्योगे तदन्यः क्रूरकर्मणि ।
पञ्चमी दशमी चैव पूर्णाऽनुग्रहकर्मणि ॥ ८

अमाचतुर्थीनवमी चतुर्दश्यपि निग्रहे ।
द्वितीया द्वादशी सप्त तुष्टिपुष्टिसमृद्धिषु ॥ ९

सन्ताने भोगभोग्येषु शान्तिष्वखिलसिद्धिषु ।
प्रथमैकादशी षष्ठी शस्ता स्तम्भविरोधयोः ॥ १०

विविधासु च बाधासु सकामोच्चाटयोस्तथा ।
त्रयोदश्यष्टमी च तृतीया त्रिजयेषु च ॥ ११

नानादुरितमोक्षे च रक्षासु निखिलात्मनाम् ।
शुभेषु शुभवाराः स्युः पापवारास्तथाऽशुभे ॥ १२

स्वातीमित्रेन्दुपौष्णेषु पुष्यादित्याश्विनीषु च ।
हस्तभे विलिखेद्यन्त्रं दिव्ये यन्त्रात्मनो हिते ॥ १३

हरिहरवसुधाता पाशिपुष्योत्तरेषु
प्रथितनिखिलरक्षावश्यकर्पार्थयन्त्रम् ।
सुतहितत्रिषतापैः(?) प्रारभेद्दिव्यलग्ने
सकलदुरितशान्त्यै सर्वसंवर्धनाय ॥ १४

तिष्येन्दुमूलश्रवणोत्तरासु
पुष्याश्विहस्तेषु निजोचिते वा ।
शुभे मुहूर्ते विदधीत रक्षां
गर्भाभिवृध्यै दुरितापहाय ॥ १५

वस्वश्विपूषादितिविष्णुहस्त-
　　मृगानुराधापितृपुष्यभेषु ।
शिक्षार्थमुच्चाटनकर्म कुर्यात्
　　पुनर्निवृत्त्यै कलुषक्षयाय ॥　　१६

चित्रात्रिपूर्वाऽग्नि(ह्नि)यमानिलार्द्रा-
　　ज्येष्ठाविशाखासु विषावकाशे ।
उच्चाटयेच्चित्रगणग्रहाभि-
　　मुख्यान् पुनर्वा रिपुभिः प्रयुक्तान् ॥　　१७

ज्येष्ठात्रिपूर्वाहिमरुत्स्वरीणां
　　विपद्वधप्रत्यरजन्मभानाम् ।
विषांशके वा युतकालरात्रौ
　　प्रसाधयेत्कर्म विनिग्रहाख्यम् ॥　　१८

बुध्न्यादित्यभगाश्च देशिकविषे(?) सप्ताहपीडोचितं
　　दस्राप्याग्निषु रत्नतो हरिमयं त्वष्टब्धिभेष्वंशतः ।
वस्वर्केन्दुविशाखविश्वभदिने पक्षान्मखा विंशतः
　　पूषामित्रदिने तु मासदुरितं यावद्दृढं साधयेत् ।　　१९

शुभयोगाः शुभाः वृद्धौ पापाः पापेषु कर्मसु ।
कुलीरवृषकोदण्डतुलासिह्मेष्वनुग्रहम् ॥　　२०

घटस्त्रींमृगयुग्मेषु प्रारभेत्सर्वशिक्षणम् ।
कोटचुक्षयोर्निग्रहं स्यात् अभिषेकं वृषे तथा ॥　　२१

लग्नेशा लग्नकेन्द्रस्थाः पापाः सद्यः फलप्रदाः ।
एवमेव समस्तानां अतिसूक्ष्मं विचार्य यः ॥ २२

कुर्यादखिलकर्माणि मन्त्री सकलकालवित् ।
कालं न लङ्घयेत् प्राज्ञः यतः कालः समस्तकृत् ॥ २३

सूक्ष्मधीर्बहुधाऽऽशोध्य कुर्यात् कालोचितक्रियाम् ।
सर्वोपापपथाभिज्ञः सावधानाखिलक्रियः ॥ २४

धीरो देशिकवाक्यस्थो मन्त्री भवति मन्त्रवित् ।
कालोचितानि कर्माणि पर्यालोच्य मुहुर्मुहुः ॥ २५

साधयेत् सुदृढं मन्त्री सर्वाभीष्टार्थसिद्धये ।
प्रयोगकालमज्ञात्वा मन्दधीरारभेत्क्रियाः ॥ २६

फलं नाप्नोत्यकालोप्तबीजवन्मन्त्रविद् ध्रुवम् ।
चिरया स तपोभिश्च सम्प्रार्थ्यापि समस्तकैः ॥ २७

आरभ्यानुचिते काले भ्रमतीशपथश्च्युतः ।
कालं संशोध्य विविधैर्लक्षणैर्गुरुवाक्यतः ॥ २८

साधयेत्सावधानेन चेतसा सर्वसिद्धये ।
दिव्योपायमानदृत्य स्वेष्टं कर्म करोति यः ॥ २९

लङ्घिताचार्यवचनो मन्त्री भ्रष्टो न संशयः ।
अनभिज्ञः पदभ्रष्टः क्रियाभ्रष्टः प्रदर्पधीः ।
अदैवज्ञः पथभ्रष्टो भविष्यति न संशयः ॥ ३१

तस्माद्देशिकवाक्यज्ञो दिव्यात्मा सूक्ष्मकालवित् ।
प्रयोगधैर्यसम्पन्नः सर्वकृद्भवति ध्रुवम् ॥ ३२

इति मासपक्षतिथिवारऋक्षयु-
ग्बहुयोगलक्षणग्रहचारलक्षणैः ।
प्रतिकालसूक्ष्ममवलोक्य दीर्घधी-
र्वितनोतु कर्म निखिलार्थसिद्धये ॥ ३३

॥ इति श्रीमहाशैवतन्त्रे श्रीदुर्गाक्रियाकालविधानं नाम पञ्चदशोपदेशः ॥



श्रीदेव्युवाच —

नानादैवतयन्त्राणां नानापटविलक्षणात् ।
विविधोपाधिदोषाणां मुक्तिसिद्धिः कथं भवेत् ॥ १

श्रीशिव उवाच –

साधु साधु शिवे भद्रे सर्वलोकहितैषिणि ।
त्वया यदुक्तमधुना रहस्यातिरहस्यकम् ।: २

देवतानां समस्तानां यन्त्राक्षरनिवासिनाम् ।
नानाजीवात्महृदयपरिपाकस्वरूपिणाम् ॥ ३

कदाचिद्यन्त्रमुख्यानां विविधापत्तिसूचकम् ।
साधकोपाधिभिः प्राप्तदोषं परिहरेत्सुधीः ॥ ४

भक्तिहीनादुदासीनात् पतिताद्युपलालनात् ।
शवस्पर्शात् अनाचारात् कालक्लृप्तेरतिक्रमात् ॥ ५

सूतकोपापाधिमुख्यैश्च विविधैर्लोकदूषणैः ।
वैमुख्यं यन्त्रनाथानां भवेन्मासं न संशयः ॥ ६

यन्त्राणि निष्फलानि स्युः अशुभं च पदे पदे ।
निर्गहितग्रहादीनां कोपवृद्धिर्भविष्यति ॥ ७

तेन संरक्षितं सर्वं पुनरापद्दशां व्रजेत् ।
पुनर्नावाहयेत् यावत् तावदत्र न संशयः ॥ ८

पादपाः सस्यजालानि तापितानि तपादिभिः ।
यथा पुनश्च प्राणन्ति दिव्यामृतनिषेवणात् ॥ ९

तथा समष्टचा व्यष्टचा वा स्मरन्नानाक्षरात्मनाम् ।
आवाह्य विद्यया कुर्यात् टक्ष(यन्त्र)रेखाभिषेककम् ॥ १०

आतपक्लिष्टवृक्षाणां वृष्टचा वृद्धिर्यथा भवेत् ।
विदोषदुष्टयन्त्राणां अभिषेकाद् बलम् तथा ॥ ११

नानादोषहरैर्मन्त्रैः नानासिद्धिविवर्धनैः ।
नारिकेलोदरैः क्षीरैः अभिषिच्य त्रिवासरम् ॥ १२

धूपदीपादिनैवेद्यैस्तोषयित्वाऽनुवासरम् ।
पुनर्वहेत्स मतिमान् यन्त्रं सर्वार्थसिद्धये ॥ १३

पुनर्वृद्धिं यथाऽभ्येति दर्शोपक्षीणचन्द्रमाः ।
तथा विदुष्टयन्त्राणां शक्तिवृद्धिर्भविष्यति ॥ १४

भ्रमरानिलतोयाद्यैर्दीपज्वालाक्षयं यथा ।
न्यूनसूतकचण्डालप्रेतैर्यन्त्रबलक्षयः ॥ १५

स्वेष्टद्रुमस्य जालानां पृथक्तोयोपसेचनम् ।
(यथा स्वेष्टद्रुजालानां पृथक्तोयोपसेचनम् ।)
तथैव स्वेष्टयन्त्राणां अभिषेकः पृथक् स्मृतः ॥ १६

नानागमादिसस्यानां यथा वर्षेण वर्धनम् ।
समष्टयाशेषयन्त्राणां अभिषेकः प्रशस्यते ॥ १७

अज्ञातज्ञातयन्त्राणां सर्वेषां वा पृथक् पृथक् ।
समष्टचाऽऽवाह्य मन्त्रेण कुर्याद्यन्त्राभिषेचनम् ॥ १८

पञ्चामृतैः पञ्चगव्यैः पञ्चद्रव्योदकैस्तथा ।
माक्षिकैरैक्षवैर्नालिकेरैः शुद्धोदकैः क्रमात् ।। १९

शुक्रवारे सिते पक्षे सुयोगे क्लृप्तवासरे ।
सिद्धाऽऽवाहनविद्याभ्यां अभिषिच्य शनैः सुधीः ।। २०

संस्कारं साधयेत् धीमान् देशकालस्थलोचितम् ।
चिरमार्यं जरन् पुष्पैरभ्यर्चर्याभीप्सितं स्मरन् ।। २१

सम्पूज्य परया भक्त्या द्विजेष्वावाह्य मन्त्रवित् ।
प्रीणयित्वोचितद्रव्यैस्तेभ्यो लब्ध्वाऽऽशिषं पराम् ।। २२

सुमुहूर्ते शुभे लग्ने साधकाभीष्टसिद्धये ।
मन्त्रपूताम्भसा सिक्तदिव्ययन्त्राणि धारयेत् ।। २३

तदादिपुण्यकालेषु नित्यनैमित्तिकेषु च ।
यन्त्रमाराध्य स स्वेशाल्लब्ध्वाऽनुग्रहमन्वहम् ।। २४

निवहेत् सुप्रसन्नात्मा सर्वाघौघविर्जितः ।
सर्वदा सर्वकल्याणगुणवृध्यै सुखाप्तये ।। २५

अयने विषुकाले च पुण्येष्वन्येषु मन्त्रवित् ।
यन्त्राधीशान्(शां) समाराध्य पूजयेद्वेदवित्तमान् ।। २६

कर्तुरिष्टफलावाप्त्यै सर्वशक्तिविवृद्धये ।
पट्टिका यावदच्छिद्राऽभिन्नाऽसंलोपिताक्षरा ।। २७

तत्तदिष्टफलावाप्त्यै वहेत् तावत् ततस्त्यजेत् ।
यत्र यन्त्रे भवेच्छिद्रं तत्प्रदेशाक्षरेशितुः ।। २८

वैमुख्यं तेन हानि:स्यात् तस्माच्छिद्रं परित्यजेत् ।
नष्टवर्णेश्वरा यन्त्रे भिन्नवर्णेश्वरास्तथा ॥ २९

धर्तारमासमालोक्य दत्वा शापं प्रयान्ति ते ।
तस्माददुष्टयन्त्राणि निवहेद्विश्वसिद्धये ॥ ३०

अथवा तत्समीकृत्य पुनर्निर्माय संवहेत् ।
यथारेखाक्षरं यन्त्रं निर्माय सुमुहूर्तके ॥ ३१

यथाविधि समाराध्य प्रसादावधि मन्त्रितम् ।
रक्षितं गोलकाभेदैर्धारयेत् सर्वसिद्धये ॥ ३२

जन्ममासेऽथ जन्मर्क्षे जन्मवारे विशेषत: ।
मतिमान् पूजयेद्यन्त्रं यन्त्रेशप्रीतिवृद्धये ॥ ३३

शिश्रूषाभिर्यथा वृक्षा: फलन्त्यपरिसङ्ख्यकम् ।
आराधनेन यन्त्रेश: ददात्यचिरत: फलम् ॥ ३४

तस्मात्सर्वप्रयन्नेन यन्त्राणि नियमेन तु ।
आराधयेत्तु शुद्धात्मा सर्वकामार्थसिद्धये ॥ ३५

**इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण विरचिते श्रीशूलिनीकल्पे - दुर्गाविश्वचालनविधाने यन्त्रदोषकथनं नाम षोडशोपदेशः ॥**



**श्रीशिव उवाच –**

रहस्यं शृणु वक्ष्यामि हेमवृद्धिप्रदं शुभम् ।
सर्वाभिवृद्धिदं दिव्यं साधकानां हिताय वै (सुखावहम्) ।। १

ऋषिर्हिरण्यगर्भःस्यात् श्रीहिरण्येश्वरीमनोः ।
प्रभाति(?)श्छन्द इत्युक्तं देवता सैव शूलिनी ।। २

साधक प्रणवार्णानि(?) बीज शक्तिश्च कीलकम् ।
हिरण्येश्वरीप्रसादसिध्यर्थे विनियुज्यते ।। ३

त्रिवर्णां दीर्घदा सर्गकरांगन्यासकालकम्
[त्रिवर्णैः दीर्घसर्गाढ्यैः कराङ्गन्यासजालकम्]
सप्तत्रिपञ्चपञ्चचतुरुद्र संख्याक्षरैर्मनोः
[सप्तत्रिपञ्चपञ्चर्तुरुद्रसङ्ख्याक्षरैर्मनोः ।।] ४

पृथग्बीजत्रयोपेतैः कराङ्गस्य(श्च) विशेषतः ।। ५

तप्तस्वर्णसमप्रभां नवजपापुष्पारुणाभाम्बरां
उद्यत्पूर्णसुधांशुमण्डलसखी(मुखीं) कल्याणवेषोज्वलाम् ।
चिन्तारत्नमयैः समस्तनिधिभिः संसेव्यमानां शिवां
भक्ताभीष्टवरप्रदाननिरतां ध्यायेद्धिरण्येश्वरीम् ।। ६

बीजादिद्व्यक्षरं तारं ओं नमो भगवतीत्यथ ।
हिरण्ये तदुद्भवे पश्चात् तदीश्वरि ततःपरम् ।। ७

तद्वर्षिणि तत्समृद्धि देहि मे तदनन्तरम् ।
स्वाहयापूरितं मन्त्रं चत्वारिंशत् शुभाक्षरम् ।। ८

सिध्यै वर्णैकसाहस्रं चतुरङ्गसमन्वितम् ।
कृत्वा ततस्तथा मन्त्री जपेत्सर्वार्थसिद्धये ॥ ९

सालराजस्य समिधं पञ्चामृतमतःपरम् ।
पायसं गोघृतं चैव जुहुयाद्धेमसिद्धये ॥ १०

* हिरण्ये यन्त्रमालिख्य सावधानं सलक्षणम् ।
देवीं विधिवदावाह्य पूज्य सर्वोपचारकैः ॥ ११

सन्निधौ परया भक्त्या नित्यं तन्नामसङ्ख्यकम् ।
प्रजपेत्सावधानेन भूहिरण्यादिसिद्धये ॥ १२

अथवा पूजितं मृष्टं यन्त्रराजं शुभावहम् ।
निर्वहेत्सावधानेन सर्वैश्वर्यसमृद्धये ॥ १३

अत्युत्तममिदं यन्त्रं अमोघं भाग्यवृद्धिदम् ।
साधकानामशेषाणां साक्षादैश्वर्यसिद्धिदम् ॥ १४

गृहारामधनक्षेत्रपशुधान्याऽभिवृद्धिदम् ।
एवं प्रतिदिनं मन्त्रं यो जपेन्मन्त्रवित्तमः ॥ १५

सम्प्राप्य निखिलान् कामान् पितृमातृकुलैःसमम् ।
अनुभूय चिरं सौख्यं समातिशयवर्जितम् ॥ १६

वर्धयत्यखिलान् बन्धून् सिद्धान् भृत्यांस्तथा परान् ।
शूलिन्या हेमदायिन्याः प्रसादेनाऽऽर्जितं धनम् ॥ १७

---

* हिरण्येश्वरीयन्त्रोद्धार श्लोकः अतीवाशुद्धः दृश्यते मातृकायाम् ॥

संस्थाप्य दिव्यवसने विधिवत्पूज्य यन्त्रकम् ।
भक्त्या स मन्त्रयेन्मन्त्री नित्यं तत्सामसङ्ख्यकम् ॥ १८

हिरण्येशीप्रसादेन वृद्धिमेत्युत्तरोत्तरम् ।
एवं वै क्षेत्रगोधान्यमुख्यवस्तूनि मन्त्रिणः ॥ १९

अत्यन्तवृद्धिमायान्ति सितपक्षामृतांशुवत् ।
इदं सकलसम्पत्तिदायकं मन्त्रमुत्तमम् ॥ २०

यः स्मरेद्देवतां देही सर्वैश्वर्याधिको भवेत् ।
अनपायमिमं मन्त्रं अमोघं सर्वसिद्धिदम् ॥ २१

यो जपेत्सावधानेन साक्षाद्धेमेश्वरो भवेत् ।
तस्य विघ्नभयं नास्ति स्वप्नेऽपि निखिलात्मनाम् ॥ २२

वरे पदे परं सौख्यमनुभूय महीतले ।
सकलैश्वर्यपूर्णात्मा भूयः शैवपदं व्रजेत् ॥ २३

**॥ इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे श्रीहिरण्येश्वरीविधानं नाम सप्तदशोपदेशः ॥**

---

श्रीदेव्युवाच –

शिव सर्वज्ञ देवेश जगदात्मन् कृपानिधे ।
मन्त्राणां कर्मसिद्धिः स्यात् केनोपायेन तद्वद ।। १

श्रीशिव उवाच —

साधु साधु शुभे देवि यदुक्तमधुना त्वया ।
सरहस्यं प्रवक्ष्यामि शृणु सर्वार्थसिद्धये ।। २

नामार्णपदपर्यायैः परैःसुक्तलक्षणैः ।
मन्त्रशास्त्ररहस्यानि ज्ञातव्यानि विवेकिभिः ।। ३

मन्त्रशास्त्रोक्तगूढार्थं सम्प्रदायं विनाऽखिलैः ।
अशक्यं सर्वथा वक्तुं तस्मादान्तं समभ्यसेत् ।। ४

मन्त्रशास्त्रं य आद्यन्तं शृणोत्याचार्यसन्निधौ ।
असकृत् सादरं सूक्ष्मं स भवेत्साधकोत्तमः ।। ५

औपदेशिकशास्त्रार्थं यः सभासु विकल्पयेत् ।
अहङ्कारेण मूढात्मा स भवेदापदां पदम् ।। ६

एकदेशपरिज्ञान दुरहङ्कारदर्पधीः ।
वादी भवति सर्वत्र सह सन्तो भवन्ति हि ।। ७

सम्प्रदायार्थतत्वज्ञः शास्त्रवित् ब्रह्मनिष्ठितः ।
समदर्शी भवेद्विद्वान् उपलालनहृष्टधीः ।। ८

शास्त्रैकदेशलेशांशबोधाहङ्कारमोहितः ।
सभासु न सहेतान्यान् स्वात्मन्यून हि यादृशम् ।।(?) ९

प्रतीताभि:(भी)रहस्यार्त्रह्मनिष्ठाश्च तापसा: ।
सभासु निजहृत्पाकं वाग्भिः प्रकटयन्ति हि ।। १०

*उपदेशं विना मन्त्रं शास्त्रं सूक्ष्मरहस्यकम् ।
न स्फुरत्येव सर्वेषां नानाशास्त्रविदामपि ।। ११

मन्त्रयन्त्रोक्तिसूक्ष्माणि तदज्ञानां न दर्शयेत् ।
दर्शयेद्यदि मोहेन तं त्यजेन्मन्त्रदेवता ।। १२

आवश्यके तु वाक्यानि कथितान्यपि मन्त्रवित् ।
न पुनः कथयेत्सङ्के तदज्ञेऽपि विशेषत: ।। १३

सर्वेषां मन्त्रनिष्ठानां धर्मोऽयं परमःस्मृत: ।
गुरुभक्तश्च तद्भावशास्त्रमार्गानतिक्रम: ।। १४

गुरुदेवाज्ञया वापि साधक: सिद्धिमार्गवित् ।
न तानि बहुधा शोध्य धर्मसूक्ष्महृदा सुधी: ।। १५

आरभेत्सर्वकर्माणि दृढसङ्कल्पपूर्वकम् ।
नारभेत्सहसा कर्म प्रारब्धं न परित्यजेत् ।। १६

मोहारम्भपरित्यागी भ्रष्टो भवति निश्चय: ।
युक्तमावश्यकं कर्मप्रारभ्य दृढसाधक: ।। १७

विघ्नोपहतमप्यान्तं लाधयेत् सर्वसिद्धये ।
आरभ्य सादरं कर्म सिध्यन्तं तेन साधयेत् ।। १८

---

* "उपदेशं विना मन्त्रशास्त्रसूक्ष्मरहस्यकम्" इति पाठः समञ्जसो भाति ।

फलं नाप्नोति सुलभं केदारादधिसस्यवत् ।
सुमुहूर्ते सुनिमित्ते च सुपात्रे धर्मसूक्ष्मवित् ॥ १९

आराधयेदात्मकुलवर्धनाय यथा सुतम् ।
भोक्तृमुक्ता यथा योषा कर्तृमुक्ता यथौषधिः ॥ २०

तथैव क्लृप्तविफलं कर्म तिष्ठत्यसाधकम् ।
आरभ्य विततं कर्म तुष्टं शंसति दुर्मतिः ॥ २१

सिद्धे नापरमाप्नोति समुद्रान्तस्थयानवत् ।
फलान्तसाधनेऽशक्ता मोहव्यापारचेतसा ॥ २२

नारभन्ते हीनगुणा विहीनं कर्म भीतितः ।
आरभ्य सादरं कर्म बुद्धिभ्रंशात् तदन्तरे ॥ २३

तत्साधनाय ते भीत्या विरमन्त्यपि मध्यमाः ।
[आफलोदयकर्माणः] देशिकाज्ञानुपालकाः ॥ २४

कुर्वन्तो विघ्नविच्छेदं साधयन्त्यान्तमुत्तमाः ।
दृढमारभ्य कर्माणि देशिकाज्ञानुवर्तिनः ॥ २५

विघ्नभीतिमलक्ष्यन्तः(?)साधयन्ति निजेप्सितम् ।
लिप्सवः क्षुद्रहृदयाः धनिकाधीनचारिणः ॥ २६

आरभ्य अनर्हकर्माणि निपतन्त्यापदर्णवे ।
कर्मारभ्याऽऽत्मनोऽशक्त्या नाथानुग्रहवर्जिताः ॥ २७

[विघ्नैः प्रतिहतात्मानः] ते पतन्त्या [भवन्त्या]पदाँ पदम् ।
मोहादारभ्य(ब्ध)कर्माणि विहितान्यप्युपेक्षया ॥ २८

न चिन्तयन्ति ये मूढाः दरिद्राःस्युर्न संशयः ।
यः कर्म ... ... ... ... ॥ २९

श्रद्धयाऽऽरभ्य कर्माणि साधयेद्यस्त्वनादरम् ।
तस्य भार्या महारोगैः (पीडीता स्यात् न संशयः) ॥ ३०

आरब्धमखिलं कर्म मनस्तापेन साधयेत् ।
क्रिया च निष्फला तस्य भार्या नश्यन्ति निश्चयम् ॥ ३१

फलान्तं साधनं कर्म विसृजेद्यः (स्तु मध्यमे)
स मूढो देवताकोपात् भ्रान्तो भवति वा गदी ॥ ३२

यरार्थसाधने यस्तु *स्वार्थं प्रार्थयदिच्छया ।
पुरार्जितं तदैश्वर्यं (प्रणश्येन्नात्र संशयः) ॥ ३३

सङ्कल्पमन्यथा कृत्वा साधयेदन्यथा यदि ।
अभार्यो दग्धभवनो मातृहा वा भवेद्ध्रुवम् ॥ ३४

गुरुवाक्यमनादृत्य मोहात् स्वैरं प्रसाधयेत् ।
कृतघ्नो मित्रहन्ता वा भवेदब्दाच्छिवाज्ञया ॥ ३५

उपेक्ष्य देशिकं दर्पात् साधयेत् कर्म सत्वरम् ।
इतोभ्रष्टस्ततोभ्रष्टः क्षीणवंशद्वयो भवेत् ॥ ३६

आचार्यानुमतिं हित्वा यःसाधयति गर्वितः ।
तमाशु देवता हन्ति भार्यां वा प्रियमात्मजम् ॥ ३७

---

* स्वार्थप्रार्थी यदीच्छया ।

शास्त्रीयबोधनं त्यक्त्वा स्वयं कृत्वान्यथा कृतम् ।
(अहङ्कारविमूढात्मा) स्थानभ्रष्टो भवेद् ध्रुवम् । ३८

देवता विपरीता तु यदा यत्र भविष्यति ।
तदा तत्कर्मणो विघ्नं कालो दर्शयति स्वयम् ॥ ३९

अकाले चारभेत्कर्म तस्य साह्याय्यदेवताः ।
विघ्नन्ति विविधोपायैर्देहजाड्यादिकर्मभिः ॥ ४०

तस्मात्सर्वप्रयत्नेन यथोक्तं कर्म सादरम् ।
आरभ्य देवताभक्त्या साधयेत्संजितेन्द्रियः ॥ ४१

विघ्नरूपेण यद् दृष्टं तत्तत्कर्म परित्यजेत् ।
आवाहनात्परं दृष्टं लक्ष्यं विघ्नैरुपप्लुतम् ॥ ४२

प्रार्थयेद्देवतामैक्यभावात्मा तत्फलाप्तये ।
आचार्यचरणध्यानात् देवतात्मैक्यभावनात् ॥ ४३

यथकालविधानेन अविघ्नेन लभेत्फलम् ।
चिद्रूपिण्यास्त्रिशूलिन्याः सुदृढोपासनाकृतः ॥ ४४

क्षोभयन्ति तदंशास्ते ब्रह्ममुख्याः स्वभक्तिभिः ।
अन्तर्बहिप्रकाशात्मा देशिकः साधकोत्तमः ॥ ४५

देवतात्मैव सन्तिष्ठन् रक्षत्यखिलचोदितात् ।
सिद्धमन्तर्बहिर्व्याप्तं तैजसं देवतात्मकम् ॥ ४६

नातिक्रामन्ति धात्राद्याः सूर्य नक्षत्र बृन्दवत् ।
प्रयोगकालसमयो दुर्निमित्तं प्रदर्शयेत् ॥ ४७

देवताविमुखध्यानं विस्मृतिश्च मनोर्गुरोः ।
सर्वत्र चित्तस्खलनं यत्तत्कर्म परित्यजेत् ॥ ४८

निःशङ्कगतियोगेन सर्वविघ्नविनाशिना ।
साधयेत्सर्वकर्माणि सर्वाभीष्टार्थसिद्धये ॥ ४९

आवाह्य शूलिनीं विप्रेष्वन्तरायविभेदिनीम् ।
पूजयन्नन्वहं कर्म फलान्तं साधयेत्सुधीः ॥ ५०

जपतर्पणहोमादिद्विजदैवतपूजनम् ।
सुभक्त्या प्रत्यहं कुर्यात् आफलं सर्वसिद्धये ॥ ५१

पूजास्तोत्रजपध्यानलयाः पञ्चविधाः स्मृताः ।
पञ्चनिष्ठाः प्रपञ्चेऽस्मिन् सर्वेषां सिद्धिदायिकाः ॥ ५२

देवताविग्रहध्यानसिद्धः सर्वाधिकः पुमान् ।
सम्पन्न इव सर्वेषां सर्वदो भवति ध्रुवम् ॥ ५३

अयमेवाधिको धर्मः सर्वोपास्तिषु मन्त्रिणाम् ।
प्रादेशिकास्त्वदन्त्वंशान् किं कुर्वन्त्यवशं गताः ॥ ५४

विश्वातीतमहाशक्तिं शूलिनीं विश्वरूपिणीम् ।
ध्यायंध्यायं जपे(प)न्मन्त्रं सर्वानुग्रहकृद्भवेत् ॥ ५५

अभिचारास्त्रशस्त्राणि(दि) व्याघ्रमुख्यैरुपद्रवैः ।
सप्तमूर्तिविकारैश्च शूलिन्यात्मा न बाध्यते ॥ ५६

* शूलिन्या त्रिजगच्चित्तं विश्वमूर्त्याभिरक्षितम् ।
किञ्चिदप्यखिलैर्भेत्तुं अशक्यं द्रुहिणादिभिः ॥ ५७

---

* उत्तरत्र द्वितीयपादाद्युक्तभावार्थानुसारित्वेन " शूलिनीमन्त्रजप्तारं " इति प्रथमपादः भवतु इति ॥

सुषुप्तौ जाग्रति स्वप्ने त्रिकालेऽप्यखिलेश्वरीम् ।
भावयन्मोक्षमाप्नोति नान्तरीकं सुखं किमु ॥ ५८

तापत्रयानलज्वालां शूलिनीदेवतामयः ।
प्रविश्य शान्तिमाप्नोति नान्तरीकं सुखं किमु ॥ ५९

जन्मान्तरसहस्रेषु कृतपुण्यस्य मन्त्रिणः ।
शूलिनीभावनात् सिद्धिः सुलभा भवति ध्रुवम् ॥ ६०

ब्राह्मणाराधनं यन्त्रपूजा होमस्तथा जपः ।
ध्यानं लयश्च मोक्षाय षट्कर्मोपास्तिरुच्यते ॥ ६१

लये लये पृथक् सिद्धिः अलयो भोग ईरितः ।
लय एव हि मोक्षःस्यात् द्वैविध्यं भोगमोक्षयोः ॥ ६२

भोगमोक्षात्मकं देव्याः साक्षादात्मैक्यभावनम् ।
षट्कर्म तस्य विज्ञेयं साधनं शुद्धचेतसाम् ॥ ६३

षट्कर्मोपासनं दिव्यं भोगमोक्षाभिधानयोः ।
स्वपरात्मभावभासिन्याः शूलिन्या मन्त्रजापिनाम् ॥ ६४

नित्यनैमित्तिको भावो लयश्चाभिमुखःस्मृतः ।
नित्यभावो जपो होमपूजा विप्रार्चनैःपरम् ॥ ६५

लयवर्जं वृथा ध्यानं ध्यानवर्जं वृथा जपः ।
जपवर्जं वृथा होमो होमवर्जं वृथार्चनम् ॥ ६६

अर्चावर्जं वृथा विप्राराधनं सिद्धिमिच्छताम् ।
षट्कर्मनिरतो मन्त्री भोगं मोक्षं च विन्दति ॥ ६७

मोक्षेच्छोर्मन्त्रिणो भोगः सिध्यत्येव तदन्तरे ।
भोगेच्छोर्न हि मोक्षः स्यात् तस्मान्मोक्षमभीप्सयेत् ।। ६८

जन्मान्तरेषु यः पापी क्षणिकं भोगमिच्छति ।
इच्छासिद्धिप्रदा सापि स्वाधिकारानुकूलतः ।। ६९

उपास्य चिन्मयीं देवीं मोक्षसौख्यैकदायिनीम् ।
कः स्वल्पं प्रार्थयेत् भोगं पारिजातं यथा तुषम् ।। ७०

तस्मात्सकलसिध्यर्थं कुर्यान्मोक्षैकसाधनम् ।
मोक्षे पदे पदे सौख्यं लभेदत्र न संशयः ।। ७१

**॥ इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण विरचिते श्रीशूलिनीकल्पे अमोघोपासनं नाम अष्टादश उपदेशः ॥**



श्रीशिव उवाच —

रहस्य श्रृणु देवेशि लघु सर्वार्थसाधकम् ।
श्रीशूलिन्या महादेव्याः प्रयोगाणां विशेषतः ।। १

वक्ष्यमाणानि मन्त्राणि नानासिद्धिप्रदानि च ।
साधयेद् द्विष (शत्रु) रक्षार्थं साधकेन्द्रो जितेन्द्रियः ।। २

मूलावसाने संयोज्य मन्त्राण्येकैकशः क्रमात् ।
तत्तत्सिध्यै तु साहस्रं जपेत्साधकपुङ्गवः ।। ३

रां नमो भगवति । श्रीशूलिनि । विश्वचालने सकल
दृग्दोष (षान्) मोचय मोचय हुं फठ् ।। (३०) ४

त्रिंशद्वर्णमिदं मन्त्रं सर्वदृग्दोष शान्तिदम् ।
त्रिंशत्सङ्ख्यं जपेदेवं साधयेत्तस्य शान्तये ।। ५

ताम्बूलमथवा भस्म मरिचक्षारतक्रकम् ।
क्षारविश्वाजमोदं वा तीक्ष्णभक्ष्येष्वभीष्टदम् ।। ६

त्रिंशत्संङ्ख्यं तु सम्मन्त्र्य कठिने(?)मूलसंयुतम् ।
साधयेत् सर्वदृग्दोषशान्तये साधकोत्तमः ।। ७

अनेनैव प्रयोगेण दृग्दोषोदरदोषकम् ।
तद्दिनाच्छान्तिमाप्नोति संशयो नास्ति शोभने ।। ८

यद्वा – नमो भगवति महाशूलिनि, विश्वभेदिनि सकल (सर्व) सन्धिवन्धं मोचय मोचय हुंफट् स्वाहा ।

द्वात्रिंशदक्षरं(?)मन्त्रं सर्वबन्ध(सिद्धि) विमोचनम् ।
द्वात्रिंशन्मन्त्रणादेव मोक्षो वै सन्धिबन्धनात् ।।

(द्वात्रिंशन्मन्त्रणादेव मोक्षो वै बन्धमोचनात् ।।)

ज्रं ओं नमो भगवति श्रींशूलिनि महासिंहिके सकलशिरस्तोदं शमय शमय स्वाहा ।।

द्वात्रिंशदर्णमन्त्रोऽयं शिरस्तोदविनाशकृत् ।
द्वात्रिंशत्सङ्ख्यजपतः शिरस्तोदः प्रशाम्यति ।। १०

ह्लीं ओं नमो भगवति महाशूलिनि ज्वल ज्वल नित्यकल्याणि ह ह ह ह सकल जनजिह्वाक्षितोदं हन हन ह्लीं अमृतेश्वरि हुं फट् ।।

अनेन दिव्यमन्त्रेण मन्त्र्य षोडशधा ततः ।
चन्दनाम्बु दृशोर्युञ्ज्यात् जम्भाम्वास्यास्यमुक्तये(?) ।।

(चन्दनाम्बु दृशोर्युञ्ज्यात् अक्षिदोषविमुक्तये ।।) ११

ब्लूं ह्लीं ओं नमो भगवति श्रीशूलिनीदेवि पञ्चास्यमहापन्नग-प्रणाशने ठ ठ ठ ठ सर्वविधस्फोटविषं शोषय शोषय शीघ्रं शोषय द्रीं हुं फट् ।।

अनेन शतधामृश्य स्फोटभेदं विशोषिति ।
(अनेन शतधा मन्त्र्य स्फोटभेदो विशुष्यति (?) ।।

वीजयेन्निम्बशाखाभिः तृणाद्यैर्वाहितादृशा (?) ।। १२

त्रिदिनादेव नश्यन्ति स्फोटभेदो न संशयः ।। १३

रैं ओं नमो भगवति महाशूलिनि ज्वालामालिनि भीषणप्रलय-कोटिसहस्रपावक ज्वालाभिः सर्वक्षतलोहितधारां शोषय शोषय बाधां शमय शमय अमृतेनाऽऽप्लावयाप्लावायक्षतामिषसन्धानं कुरु कुरु स्वाहा ।

अनेन मन्त्रराजेन पञ्चाशद्वारसङ्ख्यकम् ।
नानाविधक्षतं स्पृष्ट्वा मन्त्रयेत् रक्तशान्तये ।। १४

बन्धयेच्छुद्धपा(वा)लं च तद्व्रणोपरि तत्परम् ।
मन्त्रयेन्निम्बशाखाभिः सायंप्रातर्दिनत्रयम् ।। १५

मुखं द्विधा पुनर्बध्वा मन्त्रयेत्क्षतशान्तये ।
मधूकवृक्षशुद्धत्वक् घृष्ट्वा पक्वसु(सु)तैलके ।। १६

निधापयेत्सिक्तवस्त्रं विषबाधाप्रशान्तये ।। १७

ब्लूीं ओंनमो भगवति गृध्रवाहिनि ज्वल ज्वल महाशूलिनि विविधवृश्चिकं त्रासय त्रासय गृध्रेण खादय शीघ्रं खादय हुं फट् ।

अनेन षट्षष्टिवारं मन्त्र्य भस्मादिकं क्रमात् ।
मोचयेद्वृश्चिकविषं सावधानेन चेतसा ।। १८

ग्लूीं ओं नमो भगवति तार्क्ष्यवाहिनि तटित्कोटिसमप्रभे ज्वल ज्वल शूलिनि सर सर सर्पान्नाशय नाशय[1] भक्षय भक्षय शीघ्रं भक्षय भक्षय सर्वलोकं जीवय[2] ग्लूीं हुं फट् स्वाहा ।

अनेन षट्षष्टिसङ्ख्यं मन्त्र्य भस्मादिकं तथा ।
नाशयेत्सर्पगरलं साधकः स्थैर्यचेतसा ।। १९

ब्लीं ओं नमो भगवति मार्जारवाहिनि ज्वल ज्वल शूलिनि ह्रीं अष्टादशविधमूषिकविषं संहर संहर भक्षय भक्षय ह्रीं हुं फट् ।

---

1. नाशय नाशय ।   2. जीवय जीवय ।

अनेन दशधामन्त्र्य मूषिकस्य विषं हरेत् । २०

ज्रीं ओं नमो भगवति व्याघ्रवाहिनि ज्वल ज्वल महाशूलिनि सकलशुनकविषं ग्रासय (ग्रासय) नाशय नाशय हुं ॥

अनेनैव तु मन्त्रेण पञ्चविंशतिसङ्ख्यकम् ।
सम्मन्त्र्य भस्मचूर्णाद्यैः शुनकस्य विषं हरेत् ॥ २१

झां ओं नमो भगवति अमृतजनके ज्वल ज्वल शूलिनि अमृताप्लावनेन सर्वविषज्वरं शमय शमय मोचय मोचय शीघ्रं मोचय अमृतमये स्वाहा ॥

अष्टोत्तरशतं मन्त्र्य मोचयेत्सकलं ज्वरम् ।
ज्वराणि शमनं यान्ति दावाग्निरिव वर्षणात् ॥ २२

ह्लां ओं नमो भगवति हालाहलकण्ठि ज्वल ज्वल नित्यकल्याणि सकलभक्ष्यविषं ग्रस ठं ह्लीं श्रीं स्वाहा ॥

विषं हालाहलं ध्यात्वा साध्यं नीलगलं स्मरन् ।
भक्षितं त्वमृतं ध्यायन् मन्त्रयेत् शतसङ्ख्यकम् ॥ २३

ह्लां दुं ओं नमो भगवति श्रीशूलिनि विश्वदर्शनि देवदत्तस्वप्ने विस्मयमभीष्टं दर्शय दर्शय शीघ्रं दर्शय दुं ह्लीं स्वाहा ।

साध्यनामान्वितं चैव रात्रावष्टोत्तरं शतम् ।
जपेत् त्र्यहमभीष्टस्य स्वप्नदर्शनसिद्धये ॥ २४

यदिष्टं यस्य कस्यापि तद्वै स्वप्ने स विस्मयम् ।
दृष्ट्वा मुदं समभ्येति देवदत्तो न संशयः ॥ २५

स्फां ओं नमो भगवति स्पर्शमोहिनि देवदत्तं स्वप्नेऽभीष्ट-स्पर्शरूपेण तोषय तोषय शीघ्रं तोषय स्वाहा ।

ऊर्ध्ववत् त्रिदिनात्स्वप्नदर्शनात् प्रीतमानसः ।
देवदत्तो भवेद्रम्यात्(रत्या) मोहितो नात्र संशयः ॥ २६

क्लीं ओं नमो भगवति महाशूलिनि विश्वप्रभावदर्शनि देवदत्तस्वप्नेऽभीष्टप्रभावं दर्शय दर्शय शीघ्रं हृदयङ्गमं दर्शय स्वाहा ।

एतद्यथापुरा स्वप्नेऽभीष्टप्राभवदर्शनम् ।
दृष्ट्वा हृष्टो भवेन्नूनं अत्यद्भुतमचिन्तितम् ॥ २७

श्रीं ओंनमो भगवति सिह्मवाहिनि ज्वल ज्वल शूलिनि हरहर महाबले महादुरितविनाशिनि ह्रीं सकलबालग्रहरजस्वलापक्षिदोष-जालान्नाशय सर्वदुष्टग्रहान हन हन सकलदुरितं मोचय मोचय विश्व-पुष्टिवर्धने सर्वशिशून् वर्धय वर्धय पुष्टय पुष्टय जीवय जीवय अमृतेश्वरि अमृताप्लावनेन आनन्दय आनन्दय स्वाहा ।

अनेन दिव्यमन्त्रेण ह्यहं वा पञ्चसप्तकम् ।
त्रिसन्ध्यं दशधा मन्त्र्य प्रकुर्यादभिषेककम् ॥ २८

धारयेद् भस्म चाऽऽमन्त्र्य पाययेन्मन्त्रितं पयः ।
एवमन्यानि सम्मन्त्र्य साधयेत्सर्वशान्तये ॥ २९

श्रीं ओं नमो भगवति महाशूलिनि विश्वरूपिणि वरवरदे एहि देवत्तरूपेण आगत्य एतद्भक्ष्यभोज्यादिकमास्वाद्य सुप्रीता सती साध्य-दुरितं शमय शमय आयुषं(ष्यं) वर्धय वर्धय निरुपद्रवं वर्धय स्वाहा ॥

अनेनाद्भुतमन्त्रेण भक्ष्यभोज्यं यथोचितम् ।
स्पष्ट्वा तु शतधा मन्त्र्य दुर्गाबुध्याऽऽगताय वै ॥ ३०

सोपचारं सदा दद्यात् दुर्गाप्रीत्यै च शान्तये ।
तदादिसिद्धिपर्यन्तं द्विसन्ध्यं मूलसंयुतम् ।। ३१

शतद्वयं जपन्(पं) कुर्यात् सर्वोपद्रवशान्तये ।
जप्तेन भक्ष्यभोज्येन सुप्रीता शूलिनी स्वयम् ।। ३२

नाशयित्वाऽखिलान् दोषान् वर्धयेत्साध्यमञ्जसा ।
रमां तारं प्रणामश्च भगवत्यथ सप्तधा ।। ३३

नामतच्छूलिनि देवि द्वारेऽभ्यागत्य मायतः ।
दत्तं बलिं समास्वाद्य सुप्रीता साध्यकिल्बिषम् ।। ३४

मोचयेति द्वय सूर्यवर्गग्रहनिपीडनात् ।
देवदत्तं मोक्ष(च)य द्विः प्राणवृद्धिं कुरुद्वयम् ।। ३५

शीघ्रं कुरु ततः स्वाहा मन्त्रोऽयं ग्रहमोक्षकः ।
अनेन मन्त्रराजेन सप्तवारं बलिं हरेत् ।। ३६

पयोघृतगुळाक्तान्नं कृत्वा मानुषरूपकम् ।
वारेशवार(धान्य)चूर्णैश्च प्रसूनैरप्यलङ्कृतम् ।। ३७

तत्तदिष्टोदनैर्भक्ष्यैः कृत्वा साध्याग्रतो बलिम् ।
उद्धूपधूपदीपाभ्यां तत्तद्दिशि नयेन्निशि ।। ३८

सप्तवारेशवर्गाणां प्रीतयेऽपि च (तुष्टये) ।
सर्वोपद्रवशान्त्यै च सर्वाभीष्टार्थसिद्धये ।। ३९

तापनी वेपनी चैव रोगिणी बन्धिनी तथा ।
मारिणी क्लेदिनी चैव भ्रंशिनीति यथाक्रमम् ।। ४०

सूर्यवच्छष्टवर्गाणां तत्तन्नाम्ना समुच्चरेत् ।
(सूर्थवद्वर्गषट्कं च तत्तन्नाम्ना समुच्चरेत् ।)
शतवारं जपेन्मन्त्रं (जपं कुर्यात्) सर्वोपद्रवशान्तये ॥ ४१

जपेन भक्ष्यभोज्येन सुप्रीता शूलिनी स्वयम् ।
नाशयित्वाऽखिलान् दोषान् वर्धयेत्साध्यमञ्जसा ॥ ४२

श्रीं ओं नमो भगवति श्रीशूलिनि सर्वभूतेश्वरि ज्वल ज्वल महाबले स्वेष्टहोमेन सकलभूतान् तोषय तोषय पापान् देवदत्तं मोक्षय मोक्षय (मोचय मोचय) स्वाहा ।

अनेन दिव्यमन्त्रेण प्रतिवारं सहस्रकम् ।
तदर्धं वा तु त्रिष्वेकं शान्तये जुहुयात्सुधीः ॥ ४३

(अनेन मन्त्रेण सहस्रं, पञ्चशतं वा षट्त्रिंशदधिकशतत्रयं वा जहुयात् ॥)

**श्रीशिव उवाच –**

श्रीमहाशूलिनीदेव्या यन्त्रं यन्त्रार्णलक्षणम् ।
भूतावेशविकाश्च(रं च) तन्निवारणलक्षणम् ॥ ४४

अविस्तारमसङ्कोचममोघार्थफलप्रदम् ।
ऋजुतः शृणु वक्ष्यामि गोपनीयं जगद्धिते ॥ ४५

शुभे प्रागुत्तरा शस्ता अशुभे याम्यपश्चिमा ।
यन्त्रलेखा लिखेन्मन्त्रं तत्तत्सिध्यै नचान्यथा ॥ ४६

रेखास्तु समसम्बद्धा सममानाः समांशकाः ।
सुलभाः सिद्धिदाः पाङ्क्ता भवन्त्यन्यास्तथाऽन्यथा ॥ ४७

मानाधिकमपार्थं स्यान्मानन्यूनं विनाशकृत् ।
सममानमशेषार्थसिद्धिकृत् सिद्धिमिच्छताम् ॥ ४८

यन्त्रान्यूनाधिकारेखा पङ्क्तौ तत्रोक्ततत्फलम् । (?)
सर्वत्र सममानं यद् भवेत्तत्रत्फलप्रदम् ॥ ४९

अनुग्रहे शिवाशान्ता ... ...
पावकाशाऽसुराशान्ता निग्रहे परिकीर्तिताः ॥ ५०

कोणत्रयप्रभेदानां वर्तुलानां प्रदक्षिणम् ।
शुभं तदन्यदशुभं अन्यथासिद्धिहानिकृत् ॥ ५१

न्यूनातिरिक्तमानं यत् विपरीतं तदुच्यते ।
तस्मात्सलक्षणं सर्वसिद्धिदं स्यात् स्थिरात्मनाम् ॥ ५२

अनुग्रहे बहिर्वक्त्रो निग्रहेऽन्तर्मुखाक्षरम् ।
इतरेषामशेषाणां तिर्यग्वक्त्रं प्रशस्यते ॥ ५३

क्रमवक्त्रस्तथा सौम्ये व्युत्क्रमः क्रूरकर्मणि ।
कूटाक्षराणि सर्वत्र क्रमवक्त्रः प्रशस्यते (?) ॥ ५४

अन्यथालिखितार्णानि सिद्धिक्षयकराणि हि ।
साध्याक्षराण्यशेषाणि व्युत्क्रमाभिमुखानि हि ॥ ५५

यन्त्रभेदेऽर्णरेखाणां अशेषाणामयं विधिः ।
भूतावेशप्रकारोऽयं कथ्यते विश्वसिद्धये ॥ ५६

ग्रहाश्चतुर्विधाः प्रोक्ता नानारूपाः शरीरिणाम् ।
समावेशोऽप्यनावेश(?)र्वज्ञःस्वाप्निकस्तथा।। ५७

चतुर्विधाः क्रियाः प्रोक्ता विश्वापद्रवकारिकाः ।
पृथग्बहुगुणाः सर्वे चेष्टारूपविकारतः ।। ५८

पतिपुत्रपितृभ्रातृबन्धुस्निग्धान्यरूपिणः ।
देवतिर्यक्स्वरूपाश्च स्वाप्निका बहवः स्मृताः ।। ५९

मित्ररूपास्तथा मित्रमित्रामित्रस्वरूपकाः ।
तैजसास्तामसा आप्याः पुष्कराः पार्थिवास्तथा । ६०

... ... ... ...
पार्थिवा इति विज्ञेया स्वप्नमार्ग निशो(रो)धकाः ।। ६१

नदीतटाकरूपाश्च वृष्टिरूपा जलग्रहाः ।
नानारक्तस्वरूपाश्च स्वप्नमार्गनिरोधकाः ।। ६२

नानाज्वालास्वरूपाश्च मृगतृष्णास्वरूपकाः ।
दाहमोहमहातापकारिणस्तैजसा ग्रहाः ।। ६३

तमोरूपा भ्रमावर्तशरीरावशदायिनः ।
सर्वकार्यनिरुद्धाश्च(?)प्रशस्तास्तामसा ग्रहाः ।। ६४

अनोकहमहाशैलरोहका व्योमचारकाः ।
अचिन्त्यचाटिकाक्रोशदायिनः पौष्करा ग्रहाः ।। ६५

एतेपञ्चवि ... स्वप्नदृश्या गतागसाम् ।
न्यासभावजपैःशान्ति शनैर्यान्ति दृढात्मनाम् ।। ६६

नानाविधमृगाकाराः क्रूराः सौम्याः क्रियागुणैः ।
पापिनां भयदाः शान्ति यान्ति होमाभिषेकतः ॥ ६७

स्वप्ने शयानमारुह्य स्तम्भयन्तोऽखिलेन्द्रियम् ।
मुहुर्मुहुःशनैः(?)यान्ति एते(म)हि शिविका ग्रहाः ॥ ६८

शिवलिङ्गाभिषेकाच्च नमस्कारैः प्रदक्षिणैः ।
जपैःशान्ति शनैर्यान्ति तुषार इव भास्करात् ॥ ६९

स्त्रीपुंभोगग्रहा नानाप्रोक्तलक्षणलक्षिताः ।
अभिषेकैर्जपैर्होमैः शान्ति यान्ति च मण्डलात् ॥ ७०

एवंविधाः स्वप्नमहाग्रहाणां
विकारभेदाश्च निवृत्तिभागः(निवृत्युपायः) ।
समीरिताः सर्वभयोपशान्त्यै
विवेकिनां पापविमुक्तये च ॥ ७१

तमोमया ऋक्षमया नृमयाः क्लृप्तविग्रहाः ।
स्वप्नग्रहेष्वसाध्याः स्युः सर्वोपायैः कदाचन ॥ ७२

हासना रोदना मत्ता गायकाः कम्पनास्तथा ।
मोहनाः कपटावेशग्रहाः सप्रज्ञकाः स्मृताः ॥ ७३

जपध्यानाभिषेकादिहोमैः ब्राह्मणभोजनैः ।
उपायैः साधनैःसाध्या नान्यथा यत्नकोटिभिः ॥ ७४

दैविकाश्च महाभूता कृत्तिका(कृत्रिमा) रोगरूपिणः ।
तन्त्रक्षुद्रा विशल्याख्यास्त्वनावेशाः प्रकीर्तिताः ॥ ७५

तैलहोमाभिषेकाभिधूपनस्याञ्जनैस्तथा ।
विविधैर्बलिभिः साध्याः साधकेन्द्रैः दृढात्मभिः ॥ ७६

आवेशास्त्रिविधाः प्रोक्ता ग्रहाणां विविधात्मनाम् ।
यत्नावेशक्षणावेशा नित्यावेशाः शरीरिणाम् ॥ ७७

शरीरेषु समाविश्य निवसन्तो निरन्तरम् ।
निराहाराश्च निश्चेष्टा निर्निद्रा निर्विशङ्ककाः ॥ ७८

स्वच्छन्दचारिणोऽसाध्या मन्त्रिभिर्ब्रह्मवादिभिः ।
न्यायवाक्यप्रियाः प्रीतिहोमैः साध्यान्नदानकैः ॥ ७९

अथवा क्वचिदाविश्य बलाद् भुक्त्वा यथेप्सितम् ।
यथेष्टं विहरन्तो ये नित्यावेशास्त ईरिताः ॥ ८०

मन्त्रिणां स्पर्शमात्रेण दर्शनादभिमर्शनात् ।
आविशन्ति ग्रहा एते क्षणावेशग्रहाः स्मृताः ॥ ८१

चिराभिमर्शनैर्होमैः शनैरायान्ति ये ग्रहाः ।
यत्नावेशग्रहाः ख्याताः यत्नसिध्या क्रियादिभिः ॥ ८२

तस्माद् विविधभेदानां ग्रहाणां गुणचेष्टनैः ।
मुहुर्मुहुः परीक्ष्यैव साधयेत्साधकोत्तमः ॥ ८३

बलं गुणागुणं ज्ञात्वा ग्रहाणां पापरूपिणाम् ।
शनैरुच्चाटयेन्मन्त्री सर्वथा दृढ(स्थिर)मानसः ॥ ८४

तस्येष्टं दापयित्वा वा (प्रीत्या किञ्चित्) यथोचितम् ।
उच्चाटयेद्ग्रहान् मन्त्री सर्वभूतहिते रतः ॥ ८५

देवताज्ञामतिक्रम्य पीडयन्ति मुहुर्मुहुः ।
नावेशं तत्र वै कुर्यात् विचार्य स्थूलसूक्ष्मतः ॥ ८६

न कर्तव्यः स्त्रियावेशः कृतं बहु न भाषयेत् ।
मोहेन यदि कुर्वीत न मुञ्चन्ति जपाद् ग्रहाः ॥ ८७

यत्र कुत्रापि चाकृष्य भाषयित्वा मुहुर्ग्रहान् ।
मन्त्री न पीडयेत्क्वापि यदि सर्वहिते रतः ॥ ८८

ग्रहानाभ्य सम्भाष्य तांस्तान् प्रीत्युपलालनैः ।
कृत्वाऽभीष्टविलासानि मोचयेद्विधिपूर्वकम् ॥ ८९

मृदुवाक्यं गर्ववृध्यै कठिनं कोपवृद्धये ।
ग्रहान् प्रभाषयेत् तस्मान्मृदुकाठिन्यवर्जितम् ॥ ९०

मृदुवाक्येन गर्विष्ठाः तर्जयन्त्येव साधकम् ।
कठिनेन ग्रहाः क्रुद्धा रन्ध्रं पश्यन्ति मन्त्रिणः ॥ ९१

मृदुभिः कठिनैरन्यैः वाक्यभेदैश्च सूक्ष्मवित् ।
वशङ्कृतान् ग्रहान्मन्त्री मोचयेन्नान्यथा भुवि ॥ ९२

स्वाभिमानं परित्यज्य देशिकाज्ञानुपालकः ।
ससूक्ष्मं भाषयेन्मन्त्री ग्रहग्रस्तविरोधतः ॥ ९३

ग्रहानुद्दिश्य यत्कृत्यं क्रूररूपमनुष्ठितम् ।
ग्रस्तस्य तद्भवेत्तस्मात् ग्रहान् क्वापि न दण्डयेत् ॥ ९४

स्वेङ्गितज्ञानपर्यन्तसाधितान् स्ववशान् ग्रहान् ।
नानाचेष्टासु युञ्जीत वचनैः साध्यपूर्वकैः ॥ ९५

रोमहर्षः शिरोभारो जृम्भणं देहकम्पनम् ।
भ्रमस्त्रिकव्यथा* निद्रा हासश्वासं च रोदनम् ॥ ९६

नतोर्ध्वकायोऽञ्जलियुक् दत्तबन्धो गलस्वनः ।
भीतिः स्थानान्तरप्राप्तिर्मलमूत्रविसर्जनम् ॥ ९७

नासास्यसंस्रवोद्गारहिक्काकोष्णाङ्गवाद्य(श)काः** ।
अलक्ष्यलक्षदृष्टिश्च तोदकोशविवा(पा)दकाः ॥ ९८

ग्रहावेशस्य चिह्नानि चैवमन्यानि साधकः ।
दृष्ट्वा सुसूक्ष्ममसकृत् भाषयेदथ तान् शनैः ॥ ९९

मोचयेत्केवलं वापि कर्मभिस्तद्ग्रहोचितैः ।
सत्यवाक्या न सत्या स्यात् सत्यासत्यविवर्जनात् ॥ १००

ततश्चेष्टागुणैर्ज्ञात्वा सौम्यक्रूरसमैर्हरेत् ।
अनन्तगुणभिन्नानां ग्रहाणां गतिभेदतः ॥ १०१

ज्ञात्वा गुणं दृढस्थानः साधयेदविरोधतः ।
गुप्तं मनोहितं (ज्ञातुं) पापयोगविवर्जिते ॥ १०२

भूतावलोकनं कुर्यात् शिवात्माऽऽचार्यभक्तिमान् ।
यद्यमित्रदिने कुर्यात् मन्त्री भूतावलोकनम् ॥ १०३

---

* त्रिकव्यथा: पृष्ठवंशस्य अधस्ताद्भागे व्यथा ॥
पृष्ठवंशस्तु – The lower part of the spine – पृष्ठमध्यास्थि ॥

** वाशका – Roaring.

विपरीतं भवेन्नूनं ग्रहग्रस्तस्य चात्मनः ।
न कोपयेद् ग्रहान् क्वापि कर्तारं नाति(पि)दूषयेत् ॥ १०४

न कारयेत्प्रत्यभिज्ञां भाषयेन्न मुहुर्मुहुः ।
आचार्यचरणं ज्ञात्वा देवतात्मा च मन्त्रवान् ॥ १०५

क्रमान्नानाक्रियां कुर्यात् स्थूलेनापि च सूक्ष्मतः ।
भ्रमाभ्रमसमायुक्तं प्रोक्तलक्षणवर्जितम् ॥ १०६

शङ्काग्रह इति ख्यातः सर्वेन्द्रियविमोहदः ।
शङ्काग्रहं च सर्वज्ञं स्त्रीग्रहं राजसग्रहम् ॥ १०७

हरेच्छनैरुपायेन भस्मस्पर्शाभिषेकतः ।
नानारोगग्रहं तत्तच्छान्तिकौषधजालकम् ॥ १०८

हरेत्सम्मन्त्र्य वै दत्त्वा कृत्वा दोषापहारकः ।
रक्षोग्रहं विकर्माख्यं ग्रहं ऋणऋणग्रहम् ॥ १०९

हरेच्चिराभिषेकैश्च होमैः ब्राह्मणभोजनैः ।
पातालखेचराभिख्यकौनारदहनग्रहान् ॥ ११०

अभिषेकान्नदानाभ्यां हरेदङ्गाभिमर्शनात् ।
तार्क्ष्यमार्जारसिंह्याश्वसर्पाखुकरिणः शशाः ॥ १११

आगच्छन्त्युदयादैन्द्रादर्धयामे प्रदक्षिणम् ।
तार्क्ष्यादिषु चतुर्दिक्षु क्वचिदेत्य वसन् स्वयम् ॥ ११२

सर्पादिरूपिणं ग्रस्तं ध्यात्वा कुर्याद् ग्रहान्तरम् ।
स्वासनस्थानमज्ञात्वा यः पश्यति ग्रहादिकम् ॥ ११३

तद्ग्रहाभिभवेनैव लघुत्वं याति मन्त्रवित् ।
तस्मान्मन्त्री सुपर्णादिचतुःस्थानेषु कुत्रचित् ।। ११४

निवसन् सर्वकर्माणि साधयेत्प्रोक्तवर्त्मना ।। ११५

इति विविधगुणान् समीक्ष्य मन्त्री
ग्रहमनुदिवसं परीक्ष्य सूक्ष्मम् ।
शिवगुरुकथितैरुपायमार्गै-
रुपशमविहितं करोतु सिध्यै ।। ११६

।। इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे यन्त्रयन्त्रार्णभूतावेशलक्षण — तन्निवारणं नाम एकोनविंश उपदेशः ।।

श्रीदेव्युवाच –

सर्वसौभाग्यदायिन्याः शूलिन्याः करुणानिधे ।
मन्त्रस्यैकादशावस्थारहस्यं वद तत्वतः ॥ १

श्रीशिव उवाच —

मन्त्राणामप्यशेषाणां वरिष्ठोऽयं मनुर्यतः ।
तस्मादस्य मनोरेकादशावस्थारहस्यकम् ॥ २

ऋषिश्छन्दोदेवता च बीजं शक्तिश्च कीलकम् ।
कराङ्गावयवन्यासो ध्यानं होमो जपो लयः ॥ ३

एवमेकादशावस्थाः कथिताः शूलिनीमनोः ।
तस्मादेतद्रहस्यानि विविच्य कथयामि ते ॥ ४

सच्चिदानन्दपूर्णात्मा सर्वसूक्ष्मैकबोधकः ।
देशिकः ऋषिरित्युक्तो ध्यातव्यो मूर्ध्नि मन्त्रिभिः ॥ ५

वर्णानां नियमश्छन्दः छन्दांसि च बहूनि हि ।
त्रिपादावरमङ्ख्यार्णा गायत्रीत्यभिधीयते ॥ ६

एकादशाक्षरा त्रिष्टुप् जगती द्वादशाक्षरा ।
अष्टाक्षरात्मिकाऽनुष्टुप् पङ्क्तिः पञ्चदशाक्षरा ॥ ७

न्यूनाक्षरा दशार्णा च विराट् छन्दः प्रकीर्तितम् ।
एवं छन्दांस्यनेकानि मन्त्ररूपाणि मन्त्रिणाम् ॥ ८

सर्वत्र संविदा(छन्दसां)स्थाने न वक्त्रं च स्मरन् स्पृशेत् ।
दिव्यैर्नानाविधोपायैर्देवतात्मैक्यसिद्धये ।
देवताऽहमिति ध्यायन् हृदयं संस्पृशेत्सुधीः ॥ ९

ब्रह्मणः परिपूर्णस्य व्यक्तिर्बीजमिति स्मृतम् ।
नानाविधानि बीजानि तत्तद्व्यक्त्यात्मकादिभिः ॥ १०

देवतामयबीजस्योपासन् (?) स्वाहादयस्तथा ।
शक्तयो विविधाः प्रोक्ताः प्रभावा मन्त्रमन्त्रिणाम् ॥ ११

कीलकं भुवनव्याप्तान्तर्यामित्वमात्मनः ।
मन्त्रस्याखिलयोगेन सर्वसिद्धिर्विशेषतः ॥ १२

कराङ्गावयवन्यासाद्देवतावयवस्मृतिः ।
क्रमेण देवताभावः साक्षादव्याहतो भवेत् ॥ १३

सर्वावयवसम्पूर्णदेवतात्मानुचिन्तनम् ।
यथा भवेदविच्छिन्नं तद्ध्यानं परमं स्मृतम् ॥ १४

लोचनाद्यस्य विषयान्नानाकार्यात्मकान् पृथक् ।
तत्तदात्ममयो होमः सर्वसिद्धिकरः स्मृतः ॥ १५

स्वाग्नावेव स्वदेहादिप्रपश्चान् यो जुहोति सः ।
यथादार्ढ्यं ... ... सर्वतः सिद्धिभाग् भवेत् ॥ १६

देशिकाङ्घ्रियुगध्यानदेवता भावनान्वितम् ।
अचिन्त्यशक्तिमन्त्रस्य जपो जप इति स्मृतः ॥ १७

कायेन मनसा वाचा देवतात्माखिलं चरन् ।
अविच्छिन्नापरब्रह्मभावो लय इति स्मृतः ॥ १८

एवमेकादशैरङ्गैरमोघैरात्मसिद्धिदैः ।
उपासयेद्विशुद्धात्मा सर्ववित् ब्रह्मनिष्ठितः ॥ १९

जन्मान्तरसहस्रेषु कृतपुण्यस्य मन्त्रिणः ।
एकादशाङ्गविहितोपासना सुलभा भवेत् ।। २०

तस्मादेकादशाङ्गस्य रहस्यं गुरुवक्त्रतः ।
सावधानहृदा श्रुत्वोपासयेन्मन्त्रवित्तमः ।। २१

अन्यैश्च विविधोपायैर्यथाक्त्यात्मवेदिनाम् ।
अनेनैव दशाङ्गेन मन्त्रिणः सुलभं भवेत् ।। २२

**॥ इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे शूलिनीमन्त्रैकादशावस्थारहस्यकथनं नाम विंश उपदेशः ॥**



श्रीशिव उवाच —

सर्वशान्ति प्रवक्ष्यामि दुरितान् (हिताय) सकलात्मनाम् ।
यस्य स्मरणमात्रेण शान्तिमाप्नोत्यघौघतः ॥ १

साधकानामशेषाणां केवलानां दृढात्मनाम् ।
नानाविधमहापापरोगवेगोपशान्तये ॥ २

ग्रहक्षुद्रारिपापौघरोगसर्पादिसङ्कटे ।
नानामृत्युभये प्राप्ते चोरव्याघ्रोपपीडने ॥ ३

दुर्निमित्तेऽथ दुःस्वप्ने दुःसहे दुःखसङ्कुले ।
अनावृष्टिभये राजक्षोभे क्षामेऽतिमारुते ॥ ४

शस्त्राग्निकृत्रिमविषसुखापत्स्वन(खि)लेषु च ।
सर्वशान्ति जपेन्मन्त्री सर्वसौख्याभिवृद्धये ॥ ५

ऋष्यादिकं यथामूलं सर्वशान्त्यै नियोगकम् ।
मूलश्रीभैरवात्मेति पूर्णध्यानमुदीरितम् ॥ ६

"अहं रुद्रेभिर्वसुभिरि"ति द्वितीयवर्गकम् ।
"शन्न इन्द्राग्नी"सूक्तं "योमावाचे"ति मन्त्रकम् ॥ ७

"अहं भुवमिती"(?)सूक्तं पञ्चशान्ति त्रियम्बकम् ।
"भद्रं कर्णेभि"रिति तत्स्वराक्षरमलोपयन् ॥ ८

एकश्रुत्वाऽथवा मन्त्रं त्रिवारं प्रतिवासरम् ।
पक्षमामण्डलं वापि चतुर्भिर्जापकैः सह ॥ ९

सावधानेन वै जप्त्वा जापकेभ्यो यथाबलम् ।
दक्षिणां दापयित्वाथ शुद्धे भस्मनि धूपिते ॥ १०

रेखापावकशारभोदरमहापञ्चार्णपूर्वं द्विधा
मूलं विंशतिमर्मचन्द्रहृदये साध्यं स्वभूगर्भितम् ।
भूभूकोणमणि हितान्वितमहापञ्चार्णहृत्सन्धिकं
नानाक्षुद्रगदग्रहार्तिशमनद्वाराऽऽयुषो वर्धनम् ॥ ११

यन्त्रमालिख्य देवेशि सर्वानुग्रहकारिणीम् ।
आवाह्य विधिवत्पूज्य सर्वशान्तिस्तवं जपेत् ॥ १२

श्रीमत्सकललोकैकजनके करुणानिधे ।
पाहि मां सकलापायात् शरणागतवत्सले ॥ १३

विश्वेश्वरी विश्वरूपा विश्वव्यापारवर्धिनी ।
कल्याणी जननी सूक्ष्मा करुणा कमलेक्षणा ॥ १४

त्रिलोचना महादेवी सृष्टिस्थितिलयप्रदा ।
अमृता सुमुखी विद्या पशु(रा)पाशविमोचनी ॥ १५

अनामया जगद्धात्री कलिकल्मषनाशिनी ।
कालकण्ठी शिवा रौद्री कालरात्री महाबला ॥ १६

प्रभावती महाकाली महाभैरवतोषिणी ।
सुरूपा सुभुजा भद्रा सोमचूडा मनोन्मनी ॥ १७

निसुम्भसुम्भसंहर्त्री नित्या निखिलपावनी ।
शङ्करी मोहिनी माया शरभा सर्वमङ्गला ॥ १८

सरस्वती महालक्ष्मीः सच्चिदानन्दरूपिणी ।
मृत्युञ्जयो भयापद्घ्नी विमला वीर्यदारुणा ॥ १९

भीमरूपा भीमनादा भीमोरगविभूषणा ।
सिंहासना महाकाया शूलिनी ज्वालिनी रतिः ॥ २०

रोगहर्त्री जगद्धात्री दुर्गा विजयशूलिनी ।
अनाद्यन्ता वषट्कारी ह्रीङ्कारी ह्लादवर्धिनी ॥ २१

क्षुद्राभिचारशमनी क्षोभिणी मालिनी शुभा ।
मर्दिनी तर्जनी तुङ्गा वामोत्तुङ्गा सुकेशिनी ॥ २२

सुलभा ललिता शुद्धा सोमोत्तुङ्गा सुभाषिणी ।
सूक्ष्मा सूक्ष्मतरा शुभ्रा शोकमोहनिवारिणी ॥ २३

ज्योतिष्मती विशालाक्षा क्षयापस्मारनाशिनी ।
कात्यायनी सती साध्वी कालातीताऽरुणारुणा ॥ २४

अमला परमोदारा अवाङ्मनसगोचरा ।
अव्यक्ता रिपुदर्पघ्नी अजिताऽचा(चा)ऽपराजिता ॥ २५

धर्मार्थकाममोक्षैकदायिनी सुस्थिराम्बुजा ।
सङ्कर्षिणी घृणिर्ज्योत्स्ना नित्यानन्दाऽखिलेश्वरी ॥ २६

अष्टोत्तरशतैरेतैः शूलिनीनामभिः शुभैः ।
मन्व्य मन्त्राक्षरावृत्त्या धारयेत्तत् स मन्त्रवित् ॥ २७

कामात्क्रोधात् महालोभात् मोहाद् दर्पाच्च मत्सरात् ।
शूलिनीमूर्तयः शन्ति कुर्वन्तु मम पार्थिवाः ॥ २८

नानाविधमहारोगादसह्यानुभवाद्भयात् ।
आप्याः कुर्वन्तु मे शन्तिं शूलिनीमूर्तयः शुभाः ॥ २९

आभिचारादतिक्रूरात् क्षुद्राद्विविधकृत्रिमात् ।
शूलिनीमूर्तयः शान्तिं कुर्वन्तु मम मारुताः ॥ ३०

अज्ञानाद् (न) ब्रह्महत्यादिमहापापौघपातकात् ।
शूलिनीमूर्तयः शान्ति कुर्वन्तु मम पौष्कराः ॥ ३१

असतां निग्रहारम्भात् विघ्नात् सङ्ग्रामजाद्भयात् ।
शान्ति कुर्वन्तु मे शीघ्रं शूलिनीभानुमूर्तयः ॥ ३२

चित्तक्षोभाच्छुभारम्भविघ्नात् क्षोभाच्च विश्वतः ।
कुर्वन्तु सततं शान्ति शूलिनीसोममूर्तयः ॥ ३३

राजचोरोरगव्याघ्रमृगारातिमुखाद्भयात् ।
शीघ्रं कुर्वन्तु मे शान्ति शूलिनीदिव्यमूर्तयः ॥ ३४

जयापराः शताद्याश्च चतस्रो वीरशक्तयः ।
अन्तरावरणे क्लृप्ताः शान्ति कुर्वन्तु मे सदा ॥ ३५

ब्राह्म्याद्या मातरः सर्वा अष्टमूर्तिस्वरूपिकाः ।
इन्द्राद्या लोकपालाश्च शन्ति कुर्वन्तु सन्ततम् ॥ ३६

चतुष्षष्टिमहालक्ष्मीसेविता राज्यदेवताः ।
करोतु (कुर्वन्तु) सततं शान्तिं शूलिन्याज्ञामुपालिकाः ॥ ३७

शिवाद्या वटुकान्ताश्च ये द्व्युत्तरशतात्मकाः ।
अग्राद्यङ्गाङ्गभागस्थाः शान्ति कुर्वन्तु सन्ततम् ॥ ३८

इन्द्रादिदिग्गणानन्दभैरवा दशदिक्स्थिताः ।
सर्वरक्षां वितन्वन्तः शान्ति कुर्वन्तु सन्ततम् ॥ ३९

आदित्यादिग्रहगणाऽऽनन्दनाथाः शुभार्थदाः ।
कृत्यादिदशधा धाराः शान्ति कुर्वन्तु सन्ततम् ॥ ४०

भैरवा वसवो रुद्रा आदित्या वालखिल्यकाः ।
दिग्गजाश्च महानागाः शांति कुर्वन्तु सन्ततम् ॥ ४१

श्रीदिव्यास्त्रगणानन्दनाथाः श्रीदिव्यवाहनाः ।
माहेश्वराश्च रत्नानि शान्ति कुर्वन्तु सन्ततम् ॥ ४२

कामधेनुश्च सन्तानपर्यन्ताः सुरपादपाः ।
सरितः सागराः शैलाः शान्ति कुर्वन्तु सन्ततम् ॥ ४३

त्रयस्त्रिंशत्कोटिदेवा सर्वसिद्धिप्रदायकाः ।
ऋषयः सर्ववोद्धारः शान्ति कुर्वन्तु सन्ततम् ॥ ४४

दानवा राक्षसाः क्रूराः सिद्धगन्धर्वकिन्नराः ।
यक्षविद्याधरा नागाः शान्ति कुर्वन्तु सन्ततम् ॥ ४५

दिव्याप्सरोगणानन्दनाथाः सकलदेवताः ।
ऊनपञ्चाशदा...स्थाः सर्वशान्तिं करोतु मे ॥ ४६

अपस्मारमुखाः सर्वजन्तुपर्यन्तदेवताः ।
सर्वशत्रून् क्षोभयन्तः शान्ति कुर्वन्तु सन्ततम् ॥ ४७

शिवादियोगिनीपारदेवताः सर्वपालकाः ।
शान्ति कुर्वन्तु सततं सर्वसौख्यं जयं च मे ॥ ४८

ब्रह्माविष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
कुर्वन्तु सर्वकल्याणं सर्वाभीष्टं ममानिशम् ॥ ४९

श्रीमहाशूलिनीदुर्गा सकलैश्वर्यदायिनी ।
जयं तनोतु सर्वत्र सर्वलोकोपलालनम् ॥ ५०

सर्वशिक्षैकनिरता शूलिनी शम्भेश्वरी ।
सर्वारिगर्वशमनं कृत्वा शान्ति करोतु मे ॥ ५१

आयुरारोग्यसौभाग्यभोगभोग्यशुभोदयम् ।
करोतु शूलिनीदेवी भैरवी परदेवता ॥ ५२

पुत्रपौत्राभिवृद्धिं च बन्धुभृत्याभिवर्धनम् ।
राज्यराष्ट्राभिवृद्धिं मे करोतु मम शूलिनी ॥ ५३

सुहृद्भृत्याभिवृद्धिं च गृहग्रामाभिवर्धनम् ।
धेन्वाद्यैश्वर्यवृद्धिं मे कुर्याच्छ्रीयोगशूलिनी ॥ ५४

केवलोपासकान् भक्तान् साधकान् शास्त्ररक्षकान् ।
वर्धयेत् सर्वदा सर्वकामार्थफलदायिनी ॥ ५५

गृहग्राममहासीमा देवलोकैकपालकान् ।
पोषकान् सर्वलोकानां वर्धयेत् प्रौढशूलिनी ॥ ५६

बाधकानिष्टकान् दुष्टान् भेदकान् लोभकानपि ।
हासकान् दूषकानन्यान् नाशयेदुग्रशूलिनी ॥ ५७

कुहकान् मोहकान् भ्रष्टान् चूर्णयेत्क्षिप्रशूलिनी ।
व्यर्थाहङ्कारगर्विष्ठान् अभक्तान् शास्त्रतस्करान् ॥ ५८

प्रलोभकांस्तथाऽनिष्ठान् क्षीणयेत् क्षिप्रशूलिनी ।
शास्त्राभ्यासव्रतोद्योगमन्त्रोपासनभावना: ।। ५९

शूलिनो यन्त्रगात्रस्था करोतु सुलभा सदा ।
शास्त्रसूक्ष्मपरिज्ञानधारणार्थानुभूतय: ।। ६०

भवन्तु सुस्थिरा: शीघ्रं शूलिनीकृपया मम ।
इति गुह्यतमं दिव्यं सर्वशान्तिप्रदं स्तवम् ।। ६१

य: पठेत् श्रृणुयाद्वापि मुच्यते सर्वपातकै: ।
य: स्मरेत्प्रजपेद्भक्त्या सर्वशान्तिस्तवं सुधी: । ६२

सर्वसिद्धिमवाप्नोति सुहृद्भिश्चाखिलै: परै: ।
ऐश्वर्यमायुरारोग्यमिष्टसिद्धि बलं यश: ।। ६३

भोगभोग्यं च सन्तानं सर्वलोकैक सौहृदम् ।
चित्तसि(शु)द्धि मन: सि(शु)द्धि ज्ञानसिद्धि सुनिर्वृतिम् ।। ६४

चिरं प्राप्य स्वदेहान्ते ब्रह्मानन्दमयो भवेत् ।
सर्वशान्तिस्तवं मन्त्री यो जपेत् श्रावयेत् पठेत् । ६५

नानापायात्प्रमुच्येत तरसा नैत्र संशय: ।
कामी कामं लभेन्मर्त्य: रोगी रोगात्प्रमुच्यते ।। ६६

जयैषी जयमाप्नोति नित्यं श्रृण्वन् पठन्वर: ।
कन्या सुरूपिणं कान्तं सुपुत्रं गर्भिणी लभेत् ।। ६७

कारागृहादिबाधाभ्य:(भि:)बाध्यमान: प्रमुच्यते ।। ६८

दारिद्र्यमोहादिमहान्धकारैः
सम्पीडितो यः प्रजपेद् द्विसन्ध्यम् ।
अवाप्य सर्वार्थसमृद्धिसिद्धिं
सुखी भवेद्दीर्घमशेषमान्यः ॥ ७०

इति विरचितमेतत्सर्वशान्तिस्तवं यः
पठति जपति भक्त्या सर्वदा वा द्विसन्ध्यम् ।
विपुलकरणसौख्यं ब्रह्मविद्याऽनुभूतिं
प्रथितपदमवाप्य श्रीशिवाकारमेति ॥

**॥ इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे सर्वशान्तिस्तवं नाम एकविंश उपदेशः ॥**

श्रीशिव उवाच —

अथातः सर्वभक्तानां अन्येषां केवलात्मनाम् ।
नानाग्रहगदक्षुद्रशान्त्युपायं वदामि ते ॥ १

ब्रह्मरक्षोग्रहादीनां ग्रहाणां समुपद्रवे ।
नानाविधमहाव्याधिविपत्तौ क्षुद्रसङ्कटे ॥ २

नानादुष्टग्रहाकीर्णदेशेऽरातिसमाकुले ।
तत्तद्दुरितसंहारप्रतिमादानमुच्यते ॥ ३

उक्तोपद्रवदेहेषु यत्प्राप्तं तस्य शान्तये ।
वक्ष्यमाणप्रकारेण कारयेन्मन्त्रवित्तमः ॥ ४

एकान्ते मण्टपे रम्ये गोमयेनोपलेपिते ।
वितानलम्बिपुष्पाद्यैश्चन्द्रखण्डैश्च दर्पणैः ॥ ५

शोभिते रङ्गवल्याद्यैः तोरणैः समलङ्कृते ।
गन्धपुष्पाक्षताकीर्णे धूपदीपोपशोभिते ॥ ६

निष्कैकप्रतिमायास्तु शिवधान्यं तदर्धकम् ।
सिताक्षतं तदर्धांशं तिलं पीडार्थमुच्यते ॥ ७

एवं निष्काधिके पीठे द्रव्याधिक्यं क्रमात्स्मृतम् ।
ग्रहक्षुद्रगदानां वै श्वेतकृष्णारुणांशुकम् ॥ ८

पीठोपरि समास्तीर्य सर्वोपकरणानि च ।
सम्पाद्य वेदविद्भिश्च विद्वद्भिर्मन्त्रवित्तमैः ॥ ९

सङ्कल्प्य मन्त्रितैस्तोयैः सम्प्रोक्ष्याशावकाशकम् ।
वृत्वा प्रतिग्रहीतारं स्नातं निगमपारगम् ।। १०

कवचेन शिरस्त्रेण कर्णहस्तार्हभूषणैः ।
वस्त्रेण गन्धपुष्पाद्यैः अलङ्कृत्याथ मन्त्रवित् ।। ११

तत्तन्नाम्ना समावाह्य शूलिनीं सर्वसिद्धिदाम् ।
केशादिपादतो न्यस्येन्मूलवर्णाननेकशः ।। १२

मूलमन्त्रान्वितं न्यस्य सर्वपापविशुद्धये । १३

केशालिकाक्ष्योष्ठकपोलकर्ण-
कक्षस्तनोरःस्स्थलनाभिगुह्ये ।
जानूरुगुल्फाङ्गुलिकाङ्घ्रिदेशे
न्यसेज्ज्वलाद्यान्यखिलाक्षराणि ।। १४

तत्तद्ध्यानो(साध्यो)चितै(ते)र्द्रव्यैः (व्ये)संहृत्याभ्युक्ष्य धूप्य च
प्रतिमां स्थापयित्वाथ वह्निमाधाय दक्षिणे ।। १५

पूर्णपात्रप्रतिष्ठान्तं कृत्वा पुष्पाक्षतं वहन् ।
अभ्यर्च्य प्रतिमां तत्तन्नामभिः पूर्ववत् क्रमात् ।। १६

ततो देवीं समावाह्य पूज्य युक्तोपचारकैः ।
कृत्वाज्यसंस्कारमथो मुखान्तं मन्त्रवित्तमः ।। १७

"पवमानः सुवर्चन" इति ऋग्भिरथाष्टधा ।
"त्र्यम्बकेण" पञ्चाश "ज्जातवेदस" इत्यृचा । १८

"प्रजापते नत्वदे" तान्यष्टोत्तरशतं शनैः ।
त्रिपञ्चनामभिस्तत्तत्क्रिया (कुर्यात्) भिन्नैर्द्विजैः शुभैः ।। १९

दूर्वागलूचीतिलतण्डुलाज्यै-
हुत्वोपरिष्टाद्विधिवत् समाप्य ॥
क्रमाज्जपेद्धोममनु द्विजेन्द्रो
दानावकाशान्तमनन्यचेताः ॥ २०

दातुर्हृत्कलुषक्षुद्रग्रहरोगनिवृत्तये ।
आरोग्यभाग्यसर्वार्थसिध्यैचर्थ्यै च मन्त्रवित् ॥ २१

(विभि)न्नैर्नामभिर्देव्या ग्रहक्षुद्रगदात्मनाम् ।
भेदिनी मथिनी तत्तन्नाशिनीति त्रिभेदतः ॥ २२

प्रतिमाया ग्रहीतुश्च केशाद्यखिलभागके ।
ध्यात्वा संस्थाप्य सम्मन्त्र्य (पाद्या) द्यैर्मन्त्रवित्तमः ॥ २३

पूर्ववद् द्विजमभ्यर्च्य वामेन प्रतिमां स्पृशन् ।
दक्षिणाक्षतताम्बूलसलिलं दक्षपाणिना ॥ २४

निवसद्द्विजमालोक्य शूलिनीदेवतामयम् ।
ध्यायन्नभीप्सितं सर्वं वाचोच्चार्य ददातु सः ॥ २५

"केशाद्यखिलगात्रेषु या व्यथा वर्तते मम ।
तया ददाम्यहं तुभ्यं प्रतिमां द्विजसत्तम ॥" २६

दत्वाभीष्टाशिषं तस्मै विप्रो गच्छेत् (यथोप्सितम्) ।
गोमयाम्भोभिराद्वारं प्रोक्षयेत्तदनन्तरम् ॥ २७

एवं दिनेष्वशेषेषु कर्मनाम विकल्प्य च ।
सङ्कल्प्याभ्यर्च्य वै दद्यात् तत्तत्कार्यार्थसिद्धये ॥ २८

अखिलेष्वपि दानेषु होमप्रोक्तैर्मनूत्तमैः ।
तत्रतत्रोच्यते शेषं विशेषाद् द्विजपूजनम् ।। २९

होमद्रव्यविभेदानि दानद्रव्याणि तत्फलम् ।
दानपात्रविशेषादि सर्वकर्मफलाप्तये ।। ३०

दातुरागमने प्राप्ते प्रतिमां भावयन् द्विजः ।
अधीदिन्द्रेत्यृचा पञ्चचत्वारिंशज्जपेद् हृदा ।। ३१

ततो दाता यथायोग्यं सङ्कल्प्य प्रतिमां द्विजम् ।
पुनरभ्यर्च्य शुद्धात्मा कराभ्यां पुष्पमावहन् ।। ३२

सर्वलोकैकजनके सर्वशिक्षाक्रियात्मिके ।
सर्वारिष्टं नाशयस्व सौख्यं देहि सदा मम ।। ३३

इति जप्त्वा त्रिधाभ्यर्च्य नमस्कृत्वा सदक्षिणाम् ।
प्रतिमां परया भक्त्या दासोऽहमिति चिन्तयन् ।। ३४

देवीं विभावयन् विप्रो जगत्सौख्यविवर्धनीम् ।
कल्याणवरदां भक्तिसुलभां सर्वतोमुखाम् ।। ३५

जन्मान्तरसहस्रेषु (यत् कृतं दुरितं मया ।
तत्पाप) परिपाकेन गृहीष्व प्रतिमां द्विज ।। ३६

इति नानाविधारिष्ट (निहन्त्रीं) प्रतिमां सुधीः ।
दद्यात्तथा तथा (यत्ना)दरिष्टशमनाय वै ।। ३७

रक्षोग्रहाभिचारादि (दुष्ट) ग्रहनिवारणे ।
हिरण्यप्रतिमां दद्यात् विंशन्निष्केण निर्मिताम् ।। ३८

महातापे ज्वरे घोरे पैत्ये चन्द्रोपरागके ।
रौप्येण प्रतिमां दद्यात् त्रिशन्निष्केण निर्मिताम् ॥ ३९

शिरःश्रवणनेत्रास्यकर्णहृत्क्षुद्रशान्तये ॥
कांस्येन प्रतिमां दद्यात् अशीतिपलनिर्मिताम् ॥ ४०

व्याघ्रवानरमार्जारऋक्षात्मक्षुद्रसङ्कटे ।
वातपाण्ड्वोस्तथाऽसौम्ये कार्ष्णीयप्रतिमास्तथा ॥ ४१

रक्तपित्तातिसारार्तिसिद्धिक्षुद्रार्शःपीनसे ।
सर्वाङ्गतोदे श्वासे च ताम्राकृतिरुदीरिता ॥ ४२

प्लोषणस्फोटकोद्‌गारशूलकृत्रिमशान्तये ।
विभ्रमाध्वानशमने सीसाकृतिरुदीरिता ॥ ४३

पूर्वाङ्गस्तम्भशमने शत्रूणां गर्वशान्तये ।
क्षुद्रग्रन्थ्युपशान्त्यै च निलाकृतिरुदीरिता ॥ ४४

नानामहोदरप्लीहकूर्मगुल्मोर्ध्ववा(यु) षु ।
वेपथौ शोषणक्षुद्रे — कृतिरीरिता ॥ ४५

रक्तोद्‌गारे द्रु(रादि)मोद्‌गारे पित्तरक्तविभेदने ।
स्तब्धानिले कफोद्रेके गुलाकृतिरुदीरिता ॥ ४६

एवं नानाविधे क्षुद्रे शल्येष्वर्दितवायुषु ।
कुलिशप्रतिमां दद्याद्विजयायाखिलात्मनाम् ॥ ४७

सप्तवारग्रहापत्सु तत्तत्प्रतिकृतिः स्मृता ।
भास्करांशो भवेत् ... नृसिह्मप्रतिमा स्मृता ॥ ४८

शशाङ्कांशो भवेत् ... कूर्माकारं कुजांशके ।
बुधांशके वामनःस्यात् गुर्वंशे मत्स्यरूपकम् ॥ ४९

वराहरूपं शुक्रांशे मन्दांशे कृष्णरूपकम् ।
नक्षत्रविषयुक्तांशे स्मृता सङ्कर्षणाकृतिः ॥ ५०

लग्नस्य विषयुक्तांशे जामदग्नेः स्मृताऽऽकृतिः ।
पूर्वांशसङ्क्रमक्षुद्रे कालस्य प्रतिमा स्मृता ॥ ५१

परांशसङ्क्रमे क्षुद्रे स्मृता मृत्युञ्जयाऽऽकृतिः ।
पूर्वाक्रान्ते पराक्रान्ते वीरभद्राकृतिः स्मृता ॥ ५२

पूर्वापरसमाक्रान्ते आपदुद्धारणाकृतिः ।
निखिलक्षुद्रभेदस्य भैरवस्याऽऽकृतिः स्मृता ॥ ५३

चर्मादिधातुभेदस्य जम्बूद्वीपादिकं स्मृतम् ।
सप्तधातुसमूढस्य सर्परूपमितीरितम् ॥ ५४

**॥ इति एतावता सद्यः मातृका (सं. 12165) असम्पूर्णैव भवति ॥**

**॥ यथामातृकं प्रकाशितम् ॥**

श्रीदेवी (उवाच)

श्रीमत्सकलसूक्ष्मैकबोधकेश जगत्पते ।
प्रतिक्रियास्तोत्रमन्त्रं प्रवदस्व दयानिधे ।। १

श्रीशिव (उवाच)

शृणु देवि प्रवक्ष्यामि गुह्याद् गुह्यमनुत्तमम् ।
प्रतिक्रियाशूलिनीयं स्तोत्रमन्त्रमभीष्टदम् ।। २

सर्वमृत्युप्रशमनं सर्वोपाधिविमोचनम् ।
सर्वसौख्यकरं श्रेष्ठं सर्वकल्याणवर्धनम् ।। ३

अरातिभिरनन्तैर्यत्प्रेरितं बलवत्तरैः ।
तेन तेन प्रकारेण तत्तद्दर्पविनाशनम् ।। ४

धर्मार्थकाममोक्षाणां[1] सिद्धिदं सौख्यवर्धनम्[2] ।
रक्षाकरमशेषाणां सकलालस्यमोचनम् ।। ५

पावनं जीवनं देव्याः प्रसादात्मानुभूतिदम् ।
ऋष्यादिकं यथामूलं [3]विशेषध्यानमुच्यते ।। ६

---

इतः परं प्रकाश्यमानो भागः सं. १२१६६ मातृकायां विशकलिततया लिखितः । तत्र पृष्ठक्रमसंख्यापि न दृश्यते । परं अतीवोपयुक्तमन्त्राः दृष्टाः इति कृत्वा विशेषतः परिश्रमेण संयोज्य प्रकाश्यते ।

1. मोक्षैकसिद्धिदं 2. सौख्यवृद्धिदम् ।

3. विशेषात्कर्मचिल्लुकम् । प्रतिक्रियार्थसिद्ध्यर्थे विनियोगः कराङ्गयोः । न्यासं मूलेन वै कुर्याद्विशेषध्यानमुच्यते इत्यस्मद्गुरुवरैरुपदिष्टः पाठः ।

संवर्तानलकोटिकोटिविलसत्तेजोमयीं भीषणां
वीराभिः [1]परिवारिताभिरभितो वीर्यंग्रसद्दिक्चयाम् ।
नानामूर्तिमहाप्रयोगनिपुणैर्द्विड्भिः प्रयुक्तैः पुन-
स्तानेवाशु विनाशिनीं भयहरां ध्यायेन्महाशूलिनीम् ॥

[2] भावयन्नैकमत्येन सावधानेन चेतसा ।
अनुश्लोकं मनुं योज्य सावधानेन चेतसा ।
जपेत्प्रतिक्रियासिध्यै सर्वाभीष्टार्थसिद्धये ॥

सर्वलोकैकजनके सर्वाभीष्टफलप्रदे ।
रक्ष मां क्षुद्रजालेभ्यः पातकेभ्यश्च सर्वदा ॥

जगद्धिते जगन्नेत्रे जगन्मातर्जगन्मये ।
जगद्दुरितजालेभ्यो रक्ष मां [3]दुरितान् हर ॥

वाङ्मनःकायकरणैः जन्मान्तरशतार्जितम् ।
पापं नाशय देवेशि पाहि मां कृपयाऽनिशम् ॥

[4] असत्कार्येऽप्रवृत्तिं च सत्कार्यस्य प्रवर्तनम् ।
देवतात्मानुसन्धानं देहि मे जगदीश्वरि ॥

---

1. परिचारिकाभिरसिमत्खेटान्विताभिर्वृताम् ।
2. प्रतिक्रियाशूलिनीं तद्यन्त्रस्यान्तरनुक्षणम् ।
भावयन्नैक्यभावेन सावधानहृदा जपेत् ॥
इत्यस्मद्गुरुमुखादवगतः पाठः ॥
3. अंहिताद्भयात् ।
4. असत्कार्यनिवृत्तिं च सत्कार्येषु प्रवर्तनम् ।

सर्वावरणविद्यानुसन्धानेनात्मचिन्तनम् ।
देशिकाङ्घ्रिस्मृतिं चैव देहि मे जगदीश्वरि ॥

अनुस्यूतपरम्ब्रह्मानन्दामृतनिषेवणम् ।
अत्यन्तनिश्चलं चित्तं देहि मे जगदीश्वरि ॥

सदाशिवान्तैर्धात्राद्य[1]देवताभिर्मुनीश्वरैः :
उपास्यते पदं यत्तत् देहि मे जगदीश्वरि ॥

इन्द्रादिभिरशेषैश्च देवैरसुरराक्षसैः ।
कृतं विघ्नं निवार्याशु कृपया रक्ष रक्ष माम् ।

आत्मानं आत्मनः स्निग्धं आश्रितं परिचारकम् ।
द्रव्यदं बन्धुवर्गं च देवेशि परिरक्ष नः ॥

उपासकस्य यो यो मे यथाशक्त्यनुकूलकम् ।
करोति रक्ष तं नित्यं विपरीतकरान् हर ॥

अतुलोपासनाद्[2] विघ्नं यः करोति प्रदर्पधीः ।
उपक्षीणय तद्वंशं [3] ... ... ... ॥

श्रीदेवतामयब्रह्मभावनां विघ्नयेद्बलात् ।
तदाश्र(श)यं निरुध्याशु तन्मनःक्षोभणं कुरु ॥

---

1. धात्राद्यैः ।
2. अतुलोपासनाविघ्नं ।
3. अस्पष्टं कृमिजग्धं च पत्रं –
   "स्खालित्यं कुरु तद्व्रते" इत्यस्मत्सङ्गृहीतः पाठः ॥

अहेतुकमजस्रं यत् चिन्तयत्यतिदुःसहम् ।
तच्चित्तमचिरान्मातः क्षोभयस्वानिवारितम् ॥

येनेन्द्रियेण यत्कर्म यः करोति तदिन्द्रियम् ।
तेन नाशय देवेशि पाहि मां करुणानिधे ॥

यस्योपासनया प्रीता देवता यागकाङ्क्षकाः ।
इच्छन्ति बाधितुं यस्तु[1](?) प्रयोक्तारं ग्रसन्तु ताः ॥

नानादेश(?) [2]स्वरूपाश्च नानाचेष्टाकरा ग्रहाः ।
प्रयुक्तास्तन्मयीयैस्तान् शीघ्रं नाशय पाहि माम् ॥

* असुरा राक्षसाः क्रूरा अतिदुःखप्रदा ग्रहाः ।
प्रयुक्तास्तन्मयीयैस्तान् शीघ्रं नाशय पाहि माम् ॥

नानागणविकाराश्च नानाभूतविकारकाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

डाकिन्युरगगन्धर्वविद्याधरमया ग्रहाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

ब्रह्मराक्षसवेतालभीमोन्मत्तमया ग्रहाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

पैत्यापस्मारकूश्माण्डपापविक्रमखेचराः ।
प्रयुक्ताः ... ... पाहि माम् ॥

---

1. यास्तत्प्रयोक्तारं ... ॥ 2. देव

* सिद्धकिन्नरगन्धर्वविद्याधरमहाग्रहाः ।
प्रयुक्तास्तन्मयीयैस्तान् ... ... ॥

ज्वालामुखास्तमोभूतप्रेतपैशाचका ग्रहाः ।
प्रयुक्तास्तन्मयीयैस्तान् शीघ्रं नाशय पाहि माम् ॥

कृत्रिमाकृत्रिमा दुष्टा मोहकाः क्षोभका ग्रहाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

मह्यम्ब्वग्न्यनिलव्योमसौरचान्द्रमसा ग्रहाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

सिह्मेभमहिषव्याघ्रऋक्षवानरसूकराः ।
प्रयुक्ताः ... ... पाहि माम् ॥

एणगोमायुमार्जारशशमेषमया ग्रहाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

नकुलीगोधगौळ्याख्यकृकलासमया ग्रहाः ।
प्रयुक्ताः ... .. पाहि माम् ॥

सर्पवृश्चिककीटादिनानाजन्तुमया ग्रहाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

गृध्रश्येनभरद्वाजकाकोलूकात्मका ग्रहाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

भूचराः खेचराश्चैव द्युचरा विविधा ग्रहाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

[1] सप्तधातुरसाहाराः सप्तकोटिमहाग्रहाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

---

1. सप्तसागरमध्यस्थाः ... ।

पैत्तिकाः श्लेष्मिकाश्चैव वान्तिकाः सान्निपातिकाः ।
प्रयुक्तास्तन्मयीयैस्तान् शीघ्रं नाशय पाहि माम् ॥

[1] चित्राद्यनन्तसंयोगैः समन्यूनाधिका ग्रहाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

क्षिप्रवेगा महाकायाः सूक्ष्मकाया यमग्रहाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

चित्रवीर्याश्चित्रकायाश्चित्तक्षोभकरा ग्रहाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

अप्रधृष्या अनिर्देश्या अनिवार्यगतिग्रहाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

अविशङ्का जगद्ग्रासा विश्वासकठिना [2]ग्रहाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

विस्मृताः सकलाकाराः स्मृताः क्रूरतरा ग्रहाः ।
प्रयुक्ताः ... ... पाहि माम् ॥

---

1. यक्ष्मामयाः स्फोटमया नानारोगमया ग्रहाः । प्र० ॥
ज्ञाताज्ञातमयाः क्षुद्रा नानारूपात्मका ग्रहाः । प्र० ॥
चराचरविकाराश्च निर्विकारा महाग्रहाः । प्र० ॥
चित्राद्यनन्त ... ... । प्र० ॥
असम्पृक्ताः पराधीनाः स्वाधीनाः छान्दसा ग्रहाः ॥ प्र० ॥
इत्यसमत्पाठक्रमः अधिकः ।

2. विश्वस्ताः कठिना ग्रहाः ।

विश्वेशि विश्वजनके विश्वरूपेऽनिराकृते ।
त्राहि मां देवि सततं रिपूणां भयवर्धिनि ॥

दैविकाद्दैदिकान्नानाहेतुकात्केवलाद्भयात् ।
पाहि मां प्रणतापत्तिभञ्जने विश्वलोचने ॥

जन्मान्तरसहस्रेषु यत्कृतं [1]दुष्कृतं मया ।
तन्निवाराय मां पाहि शरण्ये भक्तवत्सले ॥

मया कृतान्यशेषाणि मदीयैश्च कृतानि वै (च) ।
पापानि [2]नाशयस्वाद्य पाहि मां परदेवते ।

ज्ञानाज्ञानकृतैः पापैः संप्राप्तं दुरितं क्षणात् ।
निवारय जगन्मातर्निखिलैरनिवारितम् ॥

नित्यानन्दमयं सौख्यं निर्मलं निरुपाधिकम् ।
देहि मे निश्चलां भक्तिं निखिलाभीष्टसिद्धिदे[3] ॥

यन्मया सकलोपायैः करणीयमितः परम् ।
तत्सर्वं साधयस्वाम्ब सर्वभूतहिते रते ॥

भवाब्धौ पतितं भीतं अनाथ दीनमानसम् ।
उद्धृत्य कृपया देवि निधेहि चरणाम्बुजे ॥

इतीदं(मं)परमं स्तोत्रमन्त्रं यः [4]प्रजपेद्दिनम् ।
तस्य मृत्युभयं नास्ति नानोपाधिभयं नहि ।

---

1. दुरितं  2. नाशयशु त्वं . . .  3. सिद्धये ॥
3. नरः ।  4. भीत्या ।

अरातिभ्योऽतिदर्पेभ्यः रोगेभ्यश्चाप्युपद्रवात् ।
मुच्यते सकलाधौघात् तरसा नैव संशयः ॥

यः स्वार्थं प्रजपेन्नित्यं परार्थं वा यथाविधि ।
तस्याभीष्टप्रदा देवी रिपुहन्त्री दयामयी ॥

भक्त्या वाप्यथवाऽभक्त्या यो जपेत्स्तोत्रमन्त्रकम् ।
स जित्वा सकलान् शत्रून् सुखी भवति भूतले ॥

पितृमातृकुलोद्भूतैः बन्धुभिश्च सुहृत्तमैः ।
शिष्यैः समाश्रितैरन्यैः चिरकालं महीतले ॥

अनुभूयेप्सितं कामं अभूतोपममद्भुतम् ।
शाश्वतं परमं धाम लभेद्देहावसानके ॥

प्रतिक्रियास्तोत्रमिदं रहस्यं
जपेद् द्विसन्ध्यं प्रतिवासरं यः ।
अवाप्य कामान् सकलान् (अखिलान्) मनीषी
निजावृतैर्मुक्तिमुपैति सत्यम् ॥

इति श्रीशिवायाः प्रसादानुभूति-
प्रदाशेषसूक्ष्मप्रयोगप्रभावम् ।
समस्तप्रकारैः कृतं सम्यगुप्तं(क्तं)
पुनः श्रोतुमिच्छस्युमे किं रहस्यम् ॥

---

## ॥ अथ शूलिनीदिग्बन्धनमन्त्रः ॥

अस्य श्रीशूलिनीदिग्बन्धनमन्त्रस्य ब्रह्मा ऋषिः गायत्री छन्दः श्रीशूलिनी दुर्गा देवता । दुं बीजं । स्वाहा शक्तिः । दिग्बन्धनार्थे सर्वग्रहनिवारणार्थे च विनियोगः ॥

| | | | |
|---|---|---|---|
| ओं भूः | ओं नमो भगवति | ज्वल ज्वल शूलिनि | हृत् |
| ओं भुवः | ,, ,, ,, | शरभशूलिनि | शिरः |
| ओं सुवः | ,, ,, ,, | आवेशशूलिनि | शिखा |
| ओं महः | ,, ,, ,, | आकर्षणशूलिनि | कवचम् |
| ओं जनः | ,, ,, ,, | उच्चाटशूलिनि | नेत्रत्रयम् |
| ओं तपः | ,, ,, ,, | संहारशूलिनि | अस्त्रम् |

एवं करन्यासाः –

१ ओं नमो भगवति असिताङ्गभैरवसहिते ब्राह्मीश्वरि इन्द्रदिशं बन्ध(य) बन्ध(य) मां रक्ष रक्ष सर्वग्रहोच्चाटनं कुरु कुरु ।

२ ओं नमो भगवति रुरुभैरवसहिते माहेश्वरि अग्निदिशं बन्ध(य) बन्ध(य) मां रक्ष रक्ष सर्वग्रहोच्चाटनं कुरु कुरु ।

३ ओं नमो भगवति चण्डभैरवसहिते कौमारीश्वरि यमदिशं बन्धय बन्धय मां रक्ष रक्ष सर्वंग्रहोच्चाटनं कुरु कुरु ।

४ ओं नमो भगवति क्रोध(न) भैरवसहिते वैष्णवीश्वरि निर्ऋति-दिशं बन्ध(य) बन्ध(य) मां रक्ष रक्ष सर्वग्रहोच्चाटनं कुरु कुरु ।

५ ओं नमो भगवति उन्मत्तभैरवसहिते वाराहि(हीश्वरि) वरुणदिशं बन्ध(य) बन्ध(य) मां रक्ष रक्ष सर्वग्रहोच्चाटनं कुरु कुरु ।

६ ओं नमो भगवति कपालिभैरवसहिते माहेन्द्रि(न्द्रीश्वरि) वायुदिशं बन्धय बन्धय मां रक्ष रक्ष सर्वग्रहोच्चाटनं कुरु कुरु ।

७ ओं नमो भगवति भीषणभैरवसहिते चामुण्डि(ण्डीश्वरि) कुबेरदिशं बन्धय बन्धय मां रक्ष रक्ष सर्वग्रहोच्चाटनं कुरु कुरु ।

८ ओं नमो भगवति संहारभैरवसहिते महावटुकेश्वरि ईशानदिशं बन्धय बन्धय मां रक्ष रक्ष सर्वग्रहोच्चाटनं कुरु कुरु ।

ओं नमो भगवति गजारूढे ज्वल ज्वल शूलिनि वज्रधारिणि चोरारिव्याघ्रभूतप्रेतपिशाचब्रह्मराक्षसशाकिनींसाकिनीहाकिनी-भेतालादिसर्वदुष्टग्रहान् उच्चाटय उच्चाटय मां रक्ष रक्ष ओं लं (ळं) ह्रीं हुं फट् स्वाहा ।

ओं नमो भगवति मेषारूढे ज्वल ज्वल शूलिनी [शक्तिधारिणि चोरारिव्याघ्रभूतप्रेतपिशाचब्रह्मराक्षसशाकिनीसाकिनीहाकिनी-भेतालादिसर्वदुष्टग्रहान् उच्चाटय उच्चाटय मां रक्ष रक्ष ओं लं (ळं) ह्रीं (रं) हुं फट् स्वाहा ।।

ओं नमो भगवति महिषारूढे ज्वल ज्वल शूलिनि दण्डधारिणि चोरारिव्याघ्रभूतप्रेतपिशाचब्रह्मराक्षसशाकिनीसाकिनीहाकिनी-भेतालादिसर्वदुष्टग्रहान् उच्चाटय उच्चाटय मां रक्ष रक्ष ओं लं (ळं) [हं] ह्रीं हुं फट् स्वाहा ।।

(ओं नमो भगवति नरारूढे ज्वल ज्वल शूलिनि खड्गधारिणि चोरारिव्याघ्रभूतप्रेतपिशाचब्रह्मराक्षसशाकिनीसाकिनीहाकिनी-भेतालादिसर्वदुष्टग्रहान् उच्चाटय उच्चाटय मां रक्ष रक्ष ओं लं (ळं) [षं] ह्रीं हुं फट् स्वाहा ।)

ओं नमो भगवति मकरारूढे ज्वल ज्वल शूलिनि पाशधारिणि चोरारिव्याघ्रभूतप्रेतपिशाचब्रह्मराक्षसशाकिनीसाकिनीहाकिनी-भेतालादिसर्वदुष्टग्रहान् उच्चाटय उच्चाटय मां रक्ष रक्ष लं (ळं) [वं] ह्रीं हुं फट् स्वाहा ।

ओं नमो भगवति मृगारूढे ज्वल ज्वल शूलिनि अङ्कुशधारिणि चोरारिव्याघ्रभूतप्रेतविशाचब्रह्मराक्षसशाकिनीसाकिनीहाकिनी–भेतालादि सर्वदुष्टग्रहान् उच्चाटय उच्चाटय मां रक्ष रक्ष लं (ळं) यं ह्लीं हुं फट् स्वाहा ।

ओं नमो भगवति अश्वारूढे ज्वल ज्वल शूलिनि गदाधारिणि चोरारिव्याघ्रभूतप्रेतपिशाचब्रह्मराक्षसशाकिनीसाकिनीहाकिनी–भेतालादिसर्वदुष्टग्रहान् उच्चाटय उच्चाटय मां रक्ष रक्ष लं (ळं) [सं] ह्लीं हुं फट् स्वाहा ।

ओं नमो भगवति वृषारूढे ज्वल ज्वल शूलिनि शूलधारिणि चोरारिव्याघ्रभूतप्रेतपिशाचब्रह्मराक्षसशाकिनीसाकिनीहाकिनी–भेतालादिसर्वदुष्टग्रहान् उच्चाटय उच्चाटय मां रक्ष रक्ष लं (ळं) [शं] ह्लीं हुं फट् स्वाहा ।

ओं नमो भगवति अश्वा(सिह्मा)रूढे ज्वल ज्वल शूलिनि सर्वशत्रुसंहारिणि सकलभूतनिवारिणि सकलराक्षससंहारिणि सिह्मवाहिनि संहारकालिके अष्टभुजे अट्टहासविलासिनि ह्लीं दुं ज्वल ज्वल शूलिनि एह्येहि आगच्छागच्छ आवेशय आवेशय आकर्षय आकर्षय भाषय भाषय बन्धय बन्धय रुन्धय रुन्धय भिन्धि भिन्धि घातय घातय छिन्धि छिन्धि ग्राहय ग्राहय सर्वराक्षसान् संहारय संहारय भूतप्रेतपिशाचग्रहब्रह्मराक्षसग्रहशाकिनीग्रहसाकिनी–ग्रहहाकिनीग्रहभेतालग्रहकालीग्रहमहाकालीग्रहकूश्माण्डग्रह आवेशग्रह–अनावेशग्रह स्वप्नग्रह अनुभोगग्रह अपस्मारग्रह यक्षग्रह पक्षि(क्ष)ग्रह मासग्रह नित्यग्रह कृत्रिमग्रहान् संहारय संहारय सर्वग्रहान् उच्चाटय उच्चाटय रं नाशय नाशय मारय मारय पूरय पूरय शोषय शोषय संहारय संहारय दाहय दाहय पाचय पाचय भक्षय भक्षय खण्डय

खण्डय खड्गेन प्रहारय प्रहारय शूलेन ताडय ताडय पाशेन बन्धय बन्धय अनलेन दाहय दाहय ह्रीं दुं दुर्गे ळं वटुकभैरवि सकलरोग-संहारिणि भूतज्वर प्रेतज्वर पिशाचज्वर राक्षसज्वर कृत्रिमज्वर-वातज्वर पित्तज्वर श्लेष्मज्वर सन्निपातज्वर ऐकाहिकज्वर द्व्याहिक-ज्वर त्र्याहिकज्वर चातुर्थिकज्वर पाक्षिकज्वर मासिकज्वर षाण्मासिक-ज्वर सांवत्सरिकज्वर पुराणज्वर सर्वज्वरान् भञ्जय भञ्जय कटिशूल-कक्ष(कुक्षि)शूल अङ्गशूल पार्श्वशूल पृष्ठशूल शिरःशूलादि सकलरोगान् संहारय संहारय परमन्त्र परयन्त्र परतन्त्र परविद्या परकर्म परकृत्रिम-परक्षुद्र परावेशान् प्रहारय प्रहारय छेदय छेदय आत्ममन्त्रयन्त्रतन्त्र-विद्यान्(:) पालय पालय मां रक्ष रक्ष मम वैरिवाग्बन्धनं कुरु कुरु ओं नमः कृष्णवाससे दुं दुर्गे वं वटुकभैरवि शं शूलिनि मम शत्रून् नाशय नाशय हुं फट् स्वाहा ॥

मार्जालरुद्रः — ह्रीं रं मार्जालरुद्राय नखदंष्ट्रायुधाय मूषिकोच्चाटनाय हुं फट् स्वाहा षड्विंशद्वर्णः ॥

ओं नमो भगवते कुक्कुटरुद्राय सेनाज्वरास्फोटं कुरु कुरु गृह्ण गृह्ण मुञ्च मुञ्च रं हुं फट् द्वि(त्रि)चत्वारिंशद्वर्णः ॥

मृत काकवन्ध्यायाः पदमन्त्रः – ओं फट् शूलिनि स्वाहा दुष्टग्रहं ज्वल हुं ज्वल (इति ॥)

शल्यप्रतिक्रियाविधिः –

अथ वच्मि महादेवि तन्त्रक्षुद्रप्रतिक्रियाम् ।
यन्त्रतन्त्रक्रियारूपक्षुद्रशल्यादिकर्मणाम् ॥ १

प्रतिक्रियां विना नैव शान्ति ना [1]याति शोभने ।

**देवी –**

देव देव महादेव कथं [2]कार्यं प्रतिक्रियाम् ॥ २

**शिवः –**

अतो वक्ष्यामि देवेशि सर्वतन्त्रप्रतिक्रियाम् ।
कीलकान् निखनेद्गेहे अभिमन्त्र्याष्टदिक्षु च ॥ ३

द्वादशाङ्गुलमानं स्यात् यद्वा प्रादेशमात्रकम् ।
अङ्गुष्ठमात्रं स्थूलं स्यात् अग्रं सूक्ष्मं समाचरेत् ॥ ४

श्रींवृक्षं निम्बवन्दाकं अश्वत्थातण्डिकां ततः ।
अश्वत्थस्य च वन्दाकं पिशाचभ्रमणीं खनेत् ॥ ५

वटवृक्षस्य वन्दाकं अङ्कोलं मूलमाहरेत् ।
औदुम्वरस्य वन्दाकं मध्ये कूबेरमूलतः ॥ ६

प्रागाद्यानि खनेद्वेश्म दिङ्मन्त्रेणाभिमन्त्रितान् ।
महादिग्बन्धमन्त्रेण मन्त्रितान् निखनेद्गृहे ॥ ७

नालिकेरैर्बलिं पूर्वं कृत्वा पश्चात्खनेन्निशि ।
सर्वशान्तिजपं पश्चात् जपित्वा धारयेद्धनम्[3] ॥ ८

तेन कृत्याभिचाराद्याः पलायन्ते न संशयः ।
समस्तभूतशल्यादिनाशाय निखनेद् भुवि ॥ ९

---

1. यान्तीह शोभने ॥ 2. कुर्यात् (or कार्या प्रतिक्रिया)
3. धनम् - ऐश्वर्यम् (विभूतिर्भूतिरैश्वर्यम् इत्यत: भस्मेति भाव: लभ्यते ॥)

अघोरं प्रतिक्रियास्तोत्रं जपेद्रात्रौ विशेषतः ।
तेन कृत्याः पलायन्ते तद्गृहे श्रीः प्रजायते ।। १०

(इति दैवशाम्बरतन्त्रे – प्रथमः)

शङ्कुना गृहरक्षां च कृत्वा पूर्वं ततः क्रियाम् ।
शल्यप्रतिक्रियां वच्मि सर्वतन्त्र निवारण(णी)म् ।। १

निष्कमात्रसुवर्णे वा राजते ताम्रपट्टके ।
प्रत्यङ्गिरादियन्त्राणि लिखित्वा क्रमशस्ततः ।। २

प्राणप्रतिष्ठां कृत्वाऽथ पूजयेदुपचारतः ।
परमान्नं नालिकेरं तत्कालसम्भवं फलम् ।। ३

माषापूपादिनैवेद्यं रक्तचन्दनकुङ्कुमैः ।
अर्चयित्वा रक्तपुष्पैः कर्पूराद्यैश्च दीपितः * ।। ४

तत्तद्विभूतौ यन्त्रांश्च लिखित्वा बिल्ववृक्षके ।
पद्मासनस्थितो जप्त्वा पद्ममुद्रां प्रदर्शयेत् ।। ५

सहस्रं प्रजपेन्नित्यं जपेत्तत्सामसङ्ख्यया ।
दिग्बन्धनं तु (च) प्रथमं जपेदेकं विभूतिना ।। ६

पदमन्त्रं च शूलिन्या सहस्रं स्तोत्रपूर्वकम् ।
महादिग्बन्धनं पश्चात् शूलिन्याः कवचं पठेत् ।। ७

वाराहिकवचं पूर्वं श्रीरामकवचं पठेत् ।
पञ्चास्यहनुमन्मन्त्रं नित्यं प्रति सहस्रकम् ।। ८

---

* दीपयेत् ॥

आथर्वणभद्रकाल्याः सहस्रं मूलमन्त्रकम् ।
पिपीलिकाप्रत्यङ्गिरसं तत्तत्तन्त्रानुसारतः ।। ९

यस्य सिद्धादिकोष्ठेषु स्वसिद्धः तदृचं जपेत् ।
परमन्त्रभक्षिणीं च बगलां जातवेदसम् ।। १०

संहारताण्डवं मन्त्रं खड्गरावणमन्त्रकम् ।
महाघोरं च शास्तारं तत्तच्छल्यानुसारतः ।। ११

निग्रहाष्टकमन्त्रं च सर्वशान्तिस्तवं जपेत् ।
रेणुकामन्त्रपूर्वं तु पुत्रार्थी जपमाचरेत् ।। १२

पञ्चाशन्मूलिकाभस्म कृत्वा तत्र जपेत्सुधीः ।
तेन लिम्पेत्सर्वगात्रं भक्षयित्वा ललाटकम् (के) ।। १३

सर्वतन्त्रादिनाशः स्यात् महाभूतनिवारणम् ।
महाव्याध्यादिशमनं सर्वाभीष्टप्रदायकम् ।। १४

सर्वज्वरहरं नृणां सर्वशल्यनिकृन्तनम् ।
स्वसिद्धमन्त्रयन्त्रादीन् कृत्वा शल्यनिवृत्तये ।। १५

जपं कृत्वा विधानेन अन्यथा निष्फलं भवेत् ।
यन्त्रलेखनमन्त्रं (न्त्रश्च) च स्वसिद्धश्चेत् फलं क्षणात् ।। १६

भवत्येव न सन्देहः अन्यथा निष्फलं भवेत् ।
सर्वाभीष्टं भवत्येव पुत्रपौत्रादिवर्धनम् ।। १७

तस्मात्स्वसिद्धमालोक्य (च्य) यन्त्रलेखनमाचरेत् ।। १८

।। इति यामले दैवशाम्बरे महातन्त्रे शल्यादिप्रतिक्रियातन्त्रं नाम द्वितीयः ।।

---

शूलिनीकल्पनिर्दिष्टवैदिकमन्त्रसूची –

यस्ते गर्भममीवा दुर्णामा योनिमाशये ।
अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् ॥
ऋग्वेदे मण्डलं १०, सू १६२ मं २

यस्ते हन्ति पतयन्तं निषत्स्नुं यः सरीसृपम् ।
जातं यस्ते जिघांसति तमितो नाशयामसि ॥ १०/१६२/३

यस्त ऊरु विहरत्यन्तरा दंपतीशये ।
योनिं यो कन्तरारेळिह तमितो नाशयामसि ॥
ऋ. १० / १६२ / ४

असुनीते पुनरस्मासु चक्षुः पुनःप्राणमिह नो धेहि भोगम् ।
ज्योक् पश्येम सूर्यनुच्चरन्तमनुमते मृळया नः स्वस्ति ॥
ऋ. मं. १० / सू. ५९-६

पुनर्नो असुं पृथिवीं ददातु पुनर्द्यौर्देवी पुनरन्तरिक्षम् ।
पुनर्नः सोमस्तन्वं ददातु पुनः पूषा पथ्यां ३ या स्वस्तिः ॥
ऋ. १०, ५९–७

यत इन्द्रभयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतिभिर्विद्विषो विमृधो जहि ॥
ऋ. ८–६१–१३

वागाम्भृणी आत्मा । त्रिष्टुप् , २ जगती

---

मुद्रणालये स्वरभेदप्रदर्शकचिह्नराहित्यात् वेदमन्त्राः स्वरचिह्नरहिततया मुद्रिताः ।

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनो भा ।
अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् ।
अहं दधामि द्रविणं हविष्मते सुप्राव्ये३ यजमानाय सुन्वते ।
अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ।
मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं

श्रृणोत्युक्तम् ।।

अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ।
अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुतमानुषेभिः ।
यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ।
अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आविवेश ।
अहं सुवे पितरमस्यमूर्धन् मम योनिरप्स्व१ अन्तः समुद्रे ।
ततो वितिष्ठे भुवनानुविश्वो तामूं द्यां वर्ष्मणोपस्पृशामि ।
अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा ।।
परो दिवा पर एना पृथिव्यै तावती महिना संबभूव ।

ऋग्वेद मं १०, सू. १२५

शंन इन्द्राग्नी—मैत्रावरुणिः—वसिष्ठः—विश्वेदेवाः त्रिष्टुप्

१ शं न इन्द्राग्नी भवतामवोभिः

शं न इन्द्रावरुणा रातहव्या ।

शमिन्द्रासोमा सुविताय शं योः

शं न इन्द्रापूषणा वाजसातौ ।।

२ शं नो भगः शमु नः शंसो अस्तु
शं नः पुरंधिः शमु सन्तु रायः ।
शं नः सत्यस्य सुयमस्य शंसः
शं नो अर्यमा पुरुजातो अस्तु ॥

३ शं नो धाता शमु धर्ता नो अस्तु
शं न उरूची भवतु स्वधाभिः ।
शं रोदसी बृहती शं नो अद्रिः
शं नो देवानां सुहवानि सन्तु ।

४ शं नो अग्निर्ज्योतिरनीको अस्तु
शं नो मित्रावरुणावश्विना शम् ।
शं नः सुकृतां सुकृतानि सन्तु
शं न इषिरो अभि वातु वातः ॥

५ शं नो द्यावापृथिवी पूर्वहूतौ
शमन्तरिक्षं दृशये नो अस्तु ।
शं न ओषधीर्वनिनो भवन्तु
शं नो रजसस्पतिरस्तु जिष्णुः ॥

६ शं न इन्द्रो वसुभिर्देवो अस्तु
शमादित्येभिर्वरुणः सुशंसः ।
शं नो रुद्रो रुद्रेभिर्जलाषः
शं नस्त्वष्टाग्नाभिरिह शृणोतु ॥

७ शं न सोमो भवतु ब्रह्म शं नः
शं नो ग्रावाणः शमुसन्तु यज्ञाः ।
शं नः स्वरूणां मितयो भवन्तु
शं नः प्रस्व१ः शम्वस्तु वेदिः ॥

८ शं नः सूर्य उरुचक्षा उदेतु
शं नश्चतस्रः प्रदिशो भवन्तु ।
शं नः पर्वता ध्रुवयो भवन्तु
शं नः सिन्धवः शमु सन्त्वापः ॥

९ शं नो अदितिर्भवतु व्रतेभिः
शं नो भवन्तु मरुतः स्वर्काः ।
शं नो विष्णुः शमु पूषा नो अस्तु
शं नो भवित्रं शम्वस्तु वायुः ॥

१० शं नो देवः सविता त्रायमाणः
शं नो भवन्तूषसो विभातीः ।
शं नः पर्जन्यो भवतु प्रजाभ्यः
शं नः क्षेत्रस्य पतिरस्तु शंभुः ॥

११ शं नो देवा विश्वदेवा भवन्तु
शं सरस्वती सह धीभिरस्तु ।
शमभिषाचः शमु रातिषाचः
शं नो दिव्याः पार्थिवाः शं नो अप्याः ॥

१२ शं नः सत्यस्य पतयो भवन्तु
शं नो अर्वन्तः शमु सन्तु गावः ।
शं न ऋभवः सुकृतः सुहस्ताः
शं नो भवन्तु पितरो हवेषु ।।

१३ शं नो अज एकपाद् देवो अस्तु
शं नोऽहिर्बुध्न्य १ शं समुद्रः ।
शं नो अपां न पात् पेरुरस्तु
शं नः पृश्निर्भवतु देवगोपा ।।

आदित्या रुद्रा वसवो जुषन्तेदं ब्रह्म क्रियमाणं न वीयः ।

१४ शृण्वन्तु नो दिव्याः पार्थिवासो
गोजाता उत ये यज्ञियासः ।

१५ ये देवानां यज्ञिया यज्ञियानां
मनोर्यजत्रा अमृता ऋतज्ञाः ।
ते नो रासन्तामुरुगायमद्य
यूयं पात स्वस्तिभिः सदा नः ।।
ऋग्वेद. मं ७, सू. ३४

वैकुण्ठ इन्द्रः । इन्द्रः । जगती ७–१०–११ त्रिष्टुप् —

१ अहं भुवं वसुनः पूर्व्यस्पतिरहं
धनानि संजयामि शश्वतः ।
मां हवन्ते पितरं न जन्तवोऽहं दाशुषे
वि भजामि भोजनम् ।।

२ अहमिन्द्रो रोधो वक्षो अथर्वण-

स्त्रिताय गा अजनयमहेरधि ।

अहं दस्युभ्यः परि नृम्णमा ददे

गोत्रा शिक्षन् दधीचे मातरिश्वने ॥

३ मह्यं त्वष्टा वज्रमतक्षदायसं

मयि देवासोऽवृजन्नपि क्रतुम् ।

ममानीकं सूर्यस्येव दुष्टरं

मामार्यन्ति कृतेन कर्त्वेन च ॥

४ अहमेतं गव्ययमश्व्यं पशुं

पुरीषिणं सायकेना हिरण्ययम् ।

पुरू सहस्रा नि शिशामि दाशुष

यन्मा सोमास उक्थिनो अमन्दिषुः ।

५ अहमिन्द्रो न परा जिग्य इद्धनां

न मृत्यवेऽव तस्थे कदाचन ।

सोममिन्मा सुन्वन्तो याचता वसु

न मे पूरवः सख्ये रिषाथन ॥



ब्राह्मो रक्षोहा । रक्षोहा । अनुष्टुप् । म. १०, सू, १६२

ब्रह्मणाग्निः संविदानो रक्षोहा बाधतामितः ।

अमीवा यस्ते गर्भं दुर्णामा योनिमाशये ॥

यस्त्वा भ्राता पतिर्भूत्वा जारोभूत्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ।।

ऋग्वेद मं. १०, सू, १६२/५

यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ।।

ऋग्वेद मं. १०, सू. १६२/६

सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव ।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ।।

ऋग्वेद मं. १०, सू. ८६/४६



शूलिनीकल्पे चतुर्दशपटले अतिरहस्यतया निर्दिष्टानां विविधफलप्रदानां [शूलिनी] पदमन्त्राणां प्रकाशनम् —

क्ष्मा – शूलिनि, वह्नि – ज्वल, तोय – दुष्टग्रह
पवन – फट्, सूर्य – ज्वल ख (व्योम) हुं इन्दु – स्वाहा ।

१ शूलिनि ज्वल दुष्टग्रह फट् ज्वल हुं स्वाहा ।
मन्त्रोऽयं गर्भार्तिशान्तिकरः गर्भवृद्धिकरः भूतग्रहनिवृत्तिकरश्च ।

२ अग्निभूभानुसलिल व्योमानिलशशिक्रमः ।
ज्वल शूलिनि ज्वल दुष्टग्रह हुं फट् स्वाहा । अयं समस्तक्षुद्र-रोगहरः शत्रूपद्रवहरः पापहारकश्च ।

३ भूव्योमाग्नि(ग्न्य)हरीशाम्बुवायुचन्द्रक्रमः मनुः ।
शूलिनि हुं ज्वल ज्वल दुष्टग्रह फट् स्वाहा ।
अयं रक्षोग्रहाभिचारादिक्षुद्रासाध्यग्रहनिवारकः ।

४ तनूनपात् इन व्योम तोय वायु महीन्दवः । ज्वल ज्वल हुं दुष्टग्रह फट् शूलिनि स्वाहा ।
अयं सर्वारिष्टनिवारकः ।

५ जलानिलमहीसूर्यव्योमानलनिशाधिपाः । दुष्टग्रह फट् शूलिनि ज्वल हुं ज्वल स्वाहा ।
अयं भूतरोगादिनाशनः पुत्रप्रदो भर्तृवश्यकरश्च ।

६ चन्द्रावनिदिनेशाग्निजीवनव्योमवायवः । स्वाहा शूलिनि ज्वल ज्वल दुष्टग्रह हुं फट् ।
भोगभोग्यप्रदः वशीकरणसिद्धिप्रदः सुतप्रदश्च ।

७ लोपामुद्रान्विन: सार्णः सर्वसञ्जीवनो मनुः ।
ज्वल शूलिनि हुं दुष्टग्रह फट् ज्वल स्वाहा ।
अयं निधिग्रहणसिद्धिप्रदः ।

८ गोरावतमयः सार्णः
ज्वल दुष्टग्रह फट् ज्वल हुं शूलिनि स्वाहा ।
अयं सर्वसञ्जीवनकरः ।

९ लोमरावतया सार्णः विवादविजयप्रदः ।
ज्वल हुं दुष्ट ग्रह फट् ज्वल शूलिनि स्वाहा ।
अयं व्यवहारकाले वादविवादे विजयप्रदः ।

१० लोकचामरभासार्णः मनुर्वैरिकुलापहः ।
ज्वल शूलिनि ज्वल हुं दुष्टग्रह फट् स्वहा ।
अयं शत्रुवंशनिर्मूलनकरः ।

११ त्रिसोपेतरमावर्णः स्वेष्टस्वप्नफलप्रदः । ज्वल स्वाहा शूलिनि ज्वल दुष्टग्रह हुं फट् ।

१२ गम्भीरतापमासार्णः – त्रैलोक्यविजयप्रदः । ज्वल फट् दुष्टग्रह ज्वल शूलिनि हुं स्वाहा ॥

१३ लोकाम्भसा च मासार्णः – विश्वभेषजसिद्धिदः ।
ज्वल शूलिनि फट् स्वाहा ज्वल दुष्टग्रह हुं ।

१४ तीरवालुकमासार्णः – ज्वल दुष्टग्रह फट् ज्वल शूलिनि हुं स्वाहा । अयं शत्रूणां वाधाकरः ।

१५ तामसालोकरम्भार्णः – सर्वशल्यनिवर्तकः ।
ज्वल हुं स्वाहा ज्वल शूलिनि दुष्टग्रह फट् ।

१६ चकार भागमासार्णः – शत्रुमध्येद्वेषकरः ।
ज़्वल शूलिनि दुष्टग्रह फट् ज़्वल हुं स्वाहा ।

१७ चरमालायवासार्णो विश्वाज्ञासिद्धिवर्धनः ।
ज्वल दुष्टग्रह हुं ज्वल शूलिन फट् स्वाहा ।

१८ पलाशरावतं सार्णो विश्वाश्चर्यफलावहः ।
शूलिनि ज्वल हुं दुष्टग्रह फट् ज़्वल स्वाहा ।

१९ कालमासाश्रभाषार्णः भूतबाधानिवर्तकः ।
शूलिनि ज्वल हुं स्वाहा दुष्टग्रह फट् ज्वल ।

२० कविसाल चरामार्णः रोगबाधानिवर्तकः ।
शूलिनि फट् स्वाहा ज्वल ज्वल दुष्टग्रह हुं ।

२१ कामारि चल संधार्णश्चोरबाधगनिवर्तकः ।
शूलिनि हुं दुष्टग्रह ज्वल ज्वल स्वाहा फट् ।

२२ रम्भाचयाङ्गमासार्णः राजबाधानिवर्तकः ।
दुष्टग्रह फट् ज्वल शूलिनि ज्वल हुं स्वाहा ।

२३ रामाङ्कभास गीतार्णः सर्वरक्षाकरः ।
दुष्टग्रह हुं शूलिनि फट् स्वाहा ज्वल ज्वल ।

२४ रोषाङ्गसूर्यवामार्ण। कन्याकुचविर्धनः ।
दुष्टग्रह ज्वल ज्वल स्वाहा शूलिनि फट् हुं ।

२५ रसमूलकचाभार्णः कन्याभोगविवर्धनः ।
दुष्टग्रह स्वाहा हुं ज्वल शूलिनि ज्वल फट् ।

२६ गोमान्सरावतोयार्णः भर्तुचितवशङ्करः ।
ज्वल हुं स्वाहा दुष्टग्रह फट् ज्वल शूलिनि ।

२७ गीतारामायवासार्णः श्वशुरादिवशङ्करः ।
ज्वल ज्वल दुष्टग्रह हुं शूलिनि फट् स्वाहा ।

२८ गोसभायमरक्तार्णो विश्वस्नेहविवर्धनः ।
ज्वल स्वाहा फट् शूलिनि हुं दुष्टग्रह ज्वल ॥

२९ गया च भार सामार्णः – सर्वैश्वर्यविवर्धनः ।
ज्वल शूलिनि ज्वल फट् दुष्टग्रह स्वाहा हुं ।

३० गोकुचाभोर साशार्णः सपत्नीविजयप्रदः ।
ज़्वज्ञ शूलिनि ज्वल फट् दुष्टग्रह स्वाहा ।

३१ भूतपालमिथःखार्णो विश्वकोपविनाशनः ।
फठ् ज़्वल शूलिनि ज्वल हुं स्वाहा दुष्टग्रह ।

३२ वासाङ्गशरचापार्णः सर्वैश्वर्यविवर्धनः ।
फट् स्वाहा ज्वल हुं दुष्टग्रह ज़्वल शूलिनि ॥

३३ भूकामरतिगोसार्णो गर्भवृद्धिप्रदायकः ।
फट् शूलिनि हुं दुष्टग्रह ज़्वल ज्वल स्वाहा ।

३४ वीरसोमाङ्कलूनार्णः गर्भस्तम्भकरः स्मृतः ।
फट् दुष्टग्रह स्वाहा हुं शूलिनि ज़्वल ज़्वल ।

३५ मासारि वातकालार्णः क्षीणगर्भविवर्धनः ।
हुं स्वाहा दुष्टग्रह फट् ज़्वल शूलिनि ज्वल ।

३६ मायाम्भसागतारार्णो गर्भबाधानिवर्तकः ।
हुं शूलिनि फट् स्वाहा ज्वल ज्वल दुष्टग्रह ।

३७ मायातालसभारार्णो जन्मकाकाघमोचकः ।
हुं शूलिनि ज्वल ज्वल स्वाहा फट् दुष्टग्रह ।

३८ मूलकोचवरासार्णः वन्ध्याजन्ममृताघहः ।
हुं ज्वल शूलिनि ज्वल फट् दुष्टग्रह स्वाहा ।

३९ तापाग्निमासरेवार्णः काकजन्माघशान्तिदः ।
ज्वल शूलिनि ज्वल हुं स्वाहा दुष्टग्रह फट् ।

४० तीरमापवसङ्गार्णः काककाकाघमोचकः ।
ज्वल दुष्टग्रह हुं शूलिनि फट् स्वाहा ज्वल ।

४१ तिलसेवायमारार्णः काकाख्यमृतदोषजित् ।
ज्वल ज्लव स्वाहा फट् शूलिनि हुं दुष्टग्रह ।

४२ स्तम्भारिसमलङ्कार्णः मृतजन्माघनाशनः ।
ज्वल फट् दुष्टग्रह स्वाहा हुं ज्वल शूलिनि ॥

४३ सिरावीतकलामार्णः लोकप्रीतिविवर्धनः ।
स्वाहा दुष्टग्रह फट् ज्वल शूलिनि ज्वल हुं ।

४४ सङ्गतारिमयाभार्णो वन्ध्यामृतमृताघनुत् ।
स्वाहा ज्वल ज्वल दुष्टग्रह हुं शूलिनि फट् ।

४५ सभाकामरताङ्गार्णः सर्वदुःस्वप्नशान्तिकृत् ।
स्वाहा फट् शूलिनि हुं दुष्टग्रह ज्वल ज्वल ।

४६ समलङ्कृतवीरार्णः लोकप्रीतिविवर्धनः ।
स्वाहा हुं ज्वल शूलिनि ज्वल फट् दुष्टग्रह ।

४७ कलिरामाम्भसातार्णः प्रजादेहविवर्धनः ।
शूलिनि ज्वल दुष्टग्रह हुं फट् स्वाहा ज्वल ।

४८ रवगीतमयासार्णो लोकप्रीतिविवर्धनः ॥
दुष्टग्रह फट् ज्वल ज्वल हुं शूलिनि स्वाहा ।

४९ लोमवासितराकार्णो लोकप्रीतिविवर्धनः ।
ज्वल हुं फट् स्वाहा ज्वल दुष्टग्रह शूलिनि ।

५० वीतमायसुवेरार्णो विश्वभ्रमणकारकः ।
फट् ज्वल हुं शूलिनि स्वाहा ज्वल दुष्टग्रह ।

५१ मांसतारकवालार्णो विविधापत्तिभञ्जनः ।
हुं स्वाहा ज्वल दुष्टग्रह शूलिनि फट् ज्वल ।

५२ स्तोभसागरमायार्णः सर्वशान्तिकरःस्मृतः ।
ज्वल फट् स्वाहा ज्वल दुष्टग्रह हुं शूलिनि ।

५३ सारगम्भार्कचमार्णः स्वप्नयोगफलप्रदः ।
स्वाहा दुष्टग्रह ज्वल फट् शूलिनि ज्वल हुं ।

५४ कविगोत्रसुतामार्णः त्रैलोक्यक्षुद्रनाशनः ।
शूलिन फट् ज्वल दुष्टग्रह स्वाहा ज्वल हुं ।

५५ रमावालकसीतार्णः सर्वप्रेरकसिद्धिदः ।
दुष्टग्रह हुं फट् ज्वल शूलिनि स्वाहा ज्वल ॥

५६ वीतमाव्ररकासार्णः प्रतिवैद्यबलापहः ।
फट् ज्वल हुं ज्वल दुष्टग्रह शूलिनि स्वाहा ॥

५७ * वासितामारवोयार्णः स्वप्रयोगफलप्रदः ।
ज्वल स्वाहा ज्वल हुं दुष्टग्रह फट् शूलिनि ॥

५८ मायासीतावलारार्णः शास्त्राद्यगुणचोदनः ।
हुं शूलिनि स्वाहा ज्वल फट् ज्वल दुष्टग्रह ॥

५९ तीरकेसमभागार्णः सर्वचित्रविचित्रदः ।
ज्वल दुष्टग्रह शूलिनि स्वाहा हुं फट् ज्वल ॥

६० सालरायतमाभार्णः सर्वग्रसनसिद्धिदः ।
स्वाहा ज्वल दुष्टग्रह शूलिनि ज्वल हुं फठ् ॥

६१ कामत्वेग्ररत्तासार्णः सर्वसङ्क्षोभसिद्धिदः ।
शूलिनि हुं फट् ज्वल दुष्टग्रह ज्वल स्वाहा ॥

६२ रतीशभोगसायार्णः ब्रह्मरक्षोविमोक्षदः ।
दुष्टग्रह ज्वल हुं फट् ज्वल स्वाहा शूलिनि ॥

६३ लासितामोघपूरार्णः क्रियोत्कर्षफलप्रदः ।
ज्वल स्वाहा ज्वल हुं फट् शूलिनि दुष्टग्रह ।

---

* वासितामरबोयार्णः इत्यपि पाठः भवेदिति शङ्कां जनयति कीटजग्धमातृका । तथासति पदमन्त्रस्य आनुपूर्वी "फट् स्वाहा ज्वल हुं दुष्टग्रह ज्वल शूलिनि" इति भवेत् : अत्र साधुत्वे भगवत्येव प्रमाणम् ।

६४ वियत्सितेशरागार्णः विश्वक्षोभनिवारण. ।
फट् शूलिनि स्वाहा ज्वल हुं दुष्टग्रह ज्वल ।

६५ मारायाथाचलभार्णो विविधद्वेषसिद्धिदः ।
हुं दुष्टग्रह शूलिनि स्वाहा ज्वल ज्वल फट् ।

६६ तैलरायसभीमार्णो विमतद्रव्यनाशनः ।
ज्वल ज्वल दुष्टग्रह शूलिनि स्वाहा फट् हुं ।

६७ सभागोरुपमेषार्णः प्रतिवादिभयापहः ।
स्वाहा फट् ज्वल दुष्टग्रह शूलिनि हुं ज्वल ।

६८ यस्तोमभोगरंसार्णः *मायाकरणसिद्धिदः ।
शूलिनि ज्वल हुं फट् ज्वल दुष्टग्रह स्वाहा ।

६९ लङ्कासीतेशवीरार्णः नाडीभेदनसिद्धिदः ।
ज्वल शूलिनि स्वाहा ज्वल हुं फट् दुष्टग्रह ।

७० भारायासतमालार्ण. एकाङ्गविकलप्रदः ।
फट् दुष्टग्रह शूलिनि स्वाहा ज्वल हुं ज्वल ।

७१ मूलराकासुताभार्णः वीर्यसिद्धिविवर्धनः ।
हुं ज्वल दुष्टग्रह शूलिनि स्वाहा ज्वल फट् ।

७२ स्तम्भगोरकसोमार्णः प्रतिमाव्याजासिद्धिदः ।
ज्वल फट् ज्वल दुष्टग्रह शूलिनि स्वाहा हुं ।

---

* "प्राणवृद्धिप्रदायकः" इति मातृकान्तरे ।

७३ सोमभङ्गोरिकोचार्णः गोगजाश्वादिसिद्धिदः ।
स्वाहा हुं फट् ज्वल दुष्टग्रह शूलिनि श्वल ।

७४ योलाभमोचसारार्णः शत्रुहृत्शूक्ष्मनाशनः ।
शूलिनि ज्वल फट् हुं ज्वल स्वाहा दुष्टग्रह ।

७५ यवमाषसुरेगार्णः शत्रुदर्पनिवर्तकः ।
शूलिनि फट् हुं ज्वल स्वाहा दुष्टग्रह ज्वल ।

७६ कुमेषरसगुम्भार्ण, शत्रुबुद्धिविनाशनः ।
शूलिनि हुं ज्वल दुष्टव्रह स्वाहा ज्वल फठ् ।

७७ युक्तासारगभीमार्णो विश्वाकृतिविभेदनः ।
शूलिनि ज्वल स्वाहा दुष्टग्रह ज्वल फब् हुं ।

७८ कंसरागविमोचार्णः सर्वसिद्धिविवर्धनः ।
शूलिनि स्वाहा दुष्टग्रह ज्वल फट् हुं ज्वल ।

७९ रागाङ्कभीमतुच्छार्णः स्पर्शसूक्ष्मविनाशनः ।
दुष्टग्रह ज्वल शूलिनि फट् हुं ज्वल स्वाहा ।

८० रसगोभीमतङ्कार्णः नेत्रसूक्ष्मनिवर्तकः ।
दुष्टग्रह स्वाहा ज्वल फट् हुं ज्वल शूलिनि ।

८१ रतिलाभमयासार्ण. शब्दज्ञाननिवर्तकः ।
दुष्टग्रह ज्वल ज्वल फट् हुं शूलिनि स्वाहा ।

८२ रामलाभायसीतार्णः महावर्षविवर्धनः ।
दुष्टग्रह हुं ज्वल फट् शूलिनि स्वाहा ज्वल ।

८३ लसद्भौमस्तु राकार्ण: विश्वसत्वविवर्धन: ।
ज्वल स्वाहा फट् हुं ज्वल दुष्टग्रह शूलिनि ।

८४ लूतभीमारिकासार्ण: विविधारिबलापह: ।
ज्वल ज्वल फट् हुं दुष्टग्रह शूलिनि स्वाहा ।

८५ वियत्सूतेशगौरार्ण: खट्गखेटविवादजित् ।
फट् शूलिनि स्वाहा ज्वल हुं ज्वल दुष्टग्रह ।

८६ वासितोमूलराकार्ण: कुन्तायुद्यविवादजित् ।
फट् स्वाहा ज्वल हुं ज्वल दुष्टग्रह शूलिनि ।

८७ मारक: सुत वालार्ण: प्रतिपक्षविनाशन: ।
हुं दुष्टग्रह शूलिनि स्वाहा ज्वल फट् ज्वल ।

८८ मूकसूतावबेरार्ण: मृगभेदविवादजित्. ।
हुं शूलिनि स्वाहा ज्वल फट् ज्वल दुष्टग्रह ।

८९ तूलरेकसमाभार्णो दु:साधदुरितापह: ।
ज्वल ज्वल दुष्टग्रह शूलिनि स्वाहा हुं फट् ।

९० मारिकस्थितभागार्ण: परसेनार्तिवृद्धिद: ।
हुं दुष्टग्रह शूलिनि स्वाहा ज्वल फट् ज्वल ।

९१ तारक: सामभोगार्ण: स्वसेनाबलवर्धन: ।
ज्वल दुष्टग्रह शूलिनि स्वाहा हुं फट् ज्वल ।

९२ समभागारोपितार्णो गृहक्षेत्रविवर्धन: ।
स्वाहा हुं फट् ज्वल दुष्टग्रह शूलिनि ज्वल ।

९३ सावेरकतमाभार्णः अभीष्टग्रसनसिद्धिदः ।

स्वाहा ज्वल दुष्टग्रह शूलिनि ज्वल हुं फट् ।

(अस्मिन्नेवोपदेशे १०७ तमे श्लोके अष्टनवतिमन्त्रा उपदिष्टा इति वचनं दृश्येते ! किन्तु चतुर्णवतिपदमन्त्रा एव उपलब्धाः ।।)

**अत्रेदमवधेयम्** – अत्र प्रदर्शितमन्त्रान् प्रयोक्तुं ते एव अर्हन्ति ये गुरुमुखात् मूलमन्त्रं स्वीकृत्य, विधिवत् कृतपूरश्चरणाः भवन्ति । अन्यथा प्रयोगा विफला भवेयुः, किञ्च प्रयोगप्रतीकारज्ञानाभावेन विपरीतफलभाजो भवेयुः इति ।।



## ॥ शूलिनीकवचम् ॥

**श्रीशिव: उवाच —**

अथ वक्ष्ये महागुह्यं कवचं सर्वसिद्धिदम् ।
समाहितेन मनसा शृणु कल्याणि तादृशम् ॥

शूलिन्या: कवचं दिव्यं जगद्रक्षणवर्धनम् ।
सर्वसिद्धिप्रदं श्रेष्ठं सर्वपापप्रणाशनम् ॥

सर्वमङ्गलमाङ्गल्यं सर्वैश्वर्यप्रदायकम् ;
ब्रह्मज्ञानप्रदं हृद्यं भीषणं जयवर्धनम् ॥

सर्वरोगहरं शान्तं सर्वरक्षाकरं परम् ।
कवचस्य ऋषिर्देव्या मृत्युञ्जय उदाहृत: ॥

उष्णिक् छन्दस्तथा देवि देवता जगदम्बिका ।
दुंकारं बीजमित्युक्तं स्वाहा शक्तिस्तत: परम् ॥

सर्वाभीष्टार्थसिध्यर्थे विनियोगो वरानने ।
मायार्णश्च करन्यासं षडङ्गं प्रणवान्वितम् ॥

ओं अस्य श्री शूलिनीकवचस्य मृत्युञ्जय ऋषि:, उष्णिक् छन्द: श्रीजगदम्बिका शूलिनी देवता । दुं बीजं । स्वाहा शक्ति: । सर्वाभीष्टार्थसिध्यर्थे (जपे) विनियोग: ।

ओं ह्रां ओं ह्रीमित्यादिभि: कराङ्गन्यासा: ॥

ध्यानम् —

तापिञ्छस्निग्धवर्णां दशशतवदनां चन्द्ररेखावतंसां
हर्यक्षस्कन्धरूढां द्विदशशतभुजां हाटवासोवृताङ्गीम् ।
ध्यायेऽहं वैरिलोकग्रसनपरिणतां क्रीडनालोलजिह्वां
देवीं क्रुद्धां सुमेधां प्रणतभयहरां शिक्षिताशेषलोकाम् ।।

जयेश्वर्यग्रतः पातु पृष्ठतो विजयेश्वरी ।
अजिता वामतः पातु दक्षिणं मेऽपराजिता ।।

ब्रह्माणी पातु केशाग्रं शिवा पातु शिरो मम ।
अम्बिका मेऽलकं पातु मुखं हैमवती तथा ।।

भवानी पातु नासाग्रं घ्राणं माहेश्वरी तथा ।
वाराही नयनं पातु मानस्तोका च दक्षिणम् ।।

जिह्वां पातु महाविद्या लम्बिकाग्रं सरस्वती ।
सत्यम्बिका ममोर्ध्वोष्ठं लक्ष्मीर्मेऽधरपल्लवम् ।।

श्रुत्यम्बा पातु मे दन्तान् कौमारी चिबुकं तथा ।
ज्वाला(कण्ठं)भीमस्वना पातु कपोलौ मे(ऽ)भयङ्करी ।।

इन्द्राणी पातु मे कर्णौ इन्द्रनाथा हनू मम ।
ग्रीवापार्श्वं महाशक्तिः ग्रीवां मे परमेश्वरी ।।

कराली दक्षिणस्कन्धं वैष्णवी पातु वामकम् ।
शिवेशी दक्षदोर्मूलं शिवदूती च वामकम् ।।

अच्युता दक्षदोर्दण्डं अनन्ता पातु वामकम् ।
दक्षकूर्परमीशानी त्रिशूली पातु वामकम् ॥

ज्वालामुखी प्रकोष्ठं मे पातु भद्रा च वामकम् ।
भैरवी मणिबन्धं मे वामं पातु महेश्वरी ॥

करपृष्ठं तु वाराही विकटाङ्गी तु वामकम् ।
अघोरा दक्षिणाङ्गुष्ठं घोररूपा तु तर्जनीम् ॥

मध्यमां रक्तकेशी चाऽनामिकां तु महाबला ।
माया कनिष्ठिकां पातु पर्वाणि विघनाशिनी ॥

नखानि मे करालास्या वामाङ्गुष्ठं महोदरी ।
तर्जनीं रक्तचामुण्डी मेघनादा तु मध्यमाम् ॥

अनामिकां रौद्रमुखी काली पातु कनिष्ठिकाम् ।
पर्वाणि कालरात्रिर्मे नारसिंह्मी नखानि मे ॥

जटिला दक्षिणं कक्षं वामकक्षं पयस्विनी ।
वक्षो ज्वालामुखी पातु हृदयं कृष्णपिङ्गला ॥

नारायणी स्तनद्वन्द्वं रुद्राणी मस्तकाग्रकम् ।
जठरं भद्रकाली मे चण्डिका उदरं तथा ॥

तद्दक्षिणमनन्ता मे तद्वामं ब्रह्मवादिनी ।
सावित्री पातु नाभिं मे गायत्री मे कटिद्वयम् ॥

त्वरिता पातु मे गुह्यं पृष्ठभागं शतानना ।
योगेश्वरी गुदं तुातु जघनं लोकमोहिनी ॥

ऊरुयुग्मं वसुमती चण्डमुण्डा तु जानुनी ।
जङ्घे कात्यायनी पातु गुल्फे महिषमर्दिनी ॥

शाकम्भरी पादपृष्ठे गौरी पादाङ्गुलीर्मम ।
सूक्ष्मा पादतलं पातु पादपार्श्वं धनञ्जया ॥

सर्वाङ्गं पातु मे पुष्टिः सर्वसन्धि मदप्रिया ।
ज्वालिनी रोमकूपाणि वसुधारा त्वचं मम ॥

वसुधा चर्म मे पातु रुधिरं मदनावती ।
तीव्रा मांसद्वयं पातु मेदो मे विघ्ननाशिनी ॥

ममास्थि भोगदा पातु मज्जां पातु परात्परा ।
पञ्चभूतं रतिःपातु शुक्लं मे कामरूपिणी ॥

मूलाधारमुमा पातु स्वाधिष्ठानं चिदङ्कुरा ।
अमृता मणिपूरं मेऽनाहतं कमलेक्षणा ॥

विशुद्धि पातु मे नादा[ऽ(था)] पातु चाज्ञां परा मम ।
जातवेदोग्निदुर्गा मे ब्रह्मरन्ध्रं सदावतु ।

शूलिनी सकलं पातु अनुक्ताङ्गं महाबला ।
जागरूकास्ववस्थासु मम पद्मावती तथा ॥

शङ्करी पातु मे पुत्रान् पुत्रीं च कमलासना ।
सहजान् शाम्भवी पातु सुभगा सुमुखं मम ॥

व्योमकेशी कुलद्वन्द्वं इष्टान्दुष्टापहारिणी ।
भवनं भुवनाकारा नगरं नगरेश्वरी ।

द्राविणी पातु राज्यं मे राजानं क्षोभनाशिनी ।
राष्ट्रं च महती पातु प्रजां सर्ववशङ्करी ।।

श्रीदेवी धनधान्यं मे सर्वदा सर्वसम्पदः ।
इति गुह्यं महावीर्यं देव्याः कवचमद्भुतम् ।।

पावनं सर्वविजयं परमायुष्यवर्धनम् ।
अभेद्यमतुलं नानाभूतप्रेतनिबर्हणम् ।।

किमत्र बहुनोक्तेन चतुर्वर्गफलप्रदम् ।
त्रिसन्ध्यं यो जपेन्नित्यं न्यासभावयुतं शिवे ।।

तस्य सर्वभयं नास्ति विजयं च करस्थले ।
कवचेनाऽऽवृतो विद्वान् स पूज्यः सकलैरपि ।
अनेनैव शरीरेण जीवन्मुक्तो भवेच्छिवे ।।

।। इति श्रीशूलिनीकवचम् ।।

॥ श्रीगणेशाय नमः ॥

॥ श्रीगुरुभ्यो नमः ॥

# "शूलिनी" टीका - गीर्वाणेन्द्रविरचिता

**त्रिपञ्चेति** – प्रथमं दक्षिणोत्तरतः रेखाद्वयं विलिख्य पुनः तत्पश्चिमे च रेखाद्वयं, पुनः दक्षिणाग्रयो रेखात्रयं पूर्वपश्चिमतो विलिख्य पुनः तथोत्तराग्रयो रेखाद्वयं (त्रयं) विलिख्य । एवं विलिखिते पञ्चदशकोष्ठानि भवन्ति । तेषु कोष्ठेष्वी (वै) शान्यमारभ्य शूलिनीमन्त्रस्यैकैकमक्षरं विलिख्य मध्यकोष्ठे दुंकारं सबिन्दुकं च भुवनेशीमध्यस्थितसाध्यनाम च विलिखेत् । रेखाग्रेषु शूलानि विलिखेत् । एतद्यन्त्रमतीव रक्षाकरम् ।

**पूजायन्त्रम्** – त्रिकोणं विलिखेत्पूर्वं तद्बहिर्वृत्तमालिखेत् । तद्बहिर्वसुपत्राब्जं पुटीकृत्य च भूपुरम् । भूपुरद्वन्द्वबाह्ये तु षट्कोणं विलिखेत्ततः । कोणाग्रे शूलमालिख्य (शूलिनीं लिख्य) तद्बाह्ये पृथिवीं यजेत् (लिखेत्) । अनुलोमविलोमाभ्यां बहिः प्रणवमालिखेत् । पूर्वं ऐंकारमालिख्य दक्षिणे मन्मथाक्षरम् । श्रींकारं पश्चिमे भागे मायाबीजं तथोत्तरे । त्रिकोणमध्ये देवीं तां ज्वालामालां विभावयेत्

टीका – प्रथमं (त्रि) कोणं विलिख्य तद्बहिर्वृत्तं विलिख्य तद्बहिः षट्कोणं विलिख्य, तद्बहिर्भूपुरद्वन्द्वं पुटीकृत्य विलिख्य तद्बहिः षट्कोणं विलिखम तत्कोणाग्रे शूलमालिख्य बहिश्चतुरस्रं विलिख्य, तद्बहिरनुलोमविलोमेन प्रणवेन संवेष्ट्य तद्बहिः पूर्वभागे वाग्भवं, दक्षिणे कामबीजं पश्चिमे श्रींकारं उत्तरे ह्रींकारं विलिखेदिति ।

**मध्ये शक्तिमिति – अस्यार्थः – प्रथममष्टपत्रं विलिख्य । तन्मध्ये भुवनेशीम् । दलमध्ये शूलिनीमन्त्रवर्णद्वन्द्वं विलिख्य केसरादिषु महिषमथिनीवर्णं विलिख्य तद्बहिस्त्रिष्टुभा संवेष्ट्य तद्बहिश्चतुरश्रं विलिख्य । तस्य कोणेषु दुर्गाबीजं दुमिति विलिखेत् ।**

**सवातवृत्तमिति** – अस्यार्थः – प्रथमं षट्कोणं, प्रागग्रत्रितये श्रीबीजम्, इतरत्रितये भुवनेशीं कर्णिकान्तरे तस्मिन् साध्यनाम विलिख्य वायुबीजेन बहिर्वेष्टयेत् ।

**क्लींकारमिति** – प्रथमं क्लीं (विलिख्य) साध्यान्वितं लिखित्वा । वहिः अष्टदलं विलिख्य तत्र (दिग्दलेषु) प्रागादिदले भुवनेशीं – आग्नेयादिषु (कोणेषु) श्रीं लिखेत् । तद्बहिः – षट्कोणं – कोणेषु कामबीजं विलिख्य – तद्बहिस्तारेण वेष्टयित्वा तस्मिन् साध्यनाम विलिखेत् ।

**त्रिकोणकोणेष्विति** – धरण्याः कोणेषु भुवनेशीं भूपुरपार्श्वयोः तारं विलिखेदित्यर्थः ।

**सबिन्दुकमिति** – मध्ये अग्निबीजं (रां इति) विलिख्य – तद्बाह्ये मन्त्रवर्णैः संवेष्टच तद्बहिः राशिकोष्ठं विलिख्य । तद्रेखाग्रेषु शूलमालिख्य । तेषु शूलेषु साध्यनाम विलिखेत् ।

**पञ्चाश्रेति** – पञ्चकोणे वायुबीजं मध्ये । हुं फडिति कोणेषु शूलाग्रेषु साध्यं प्रणवेन वेष्टयेत् ।

**त्रिकोणं विलिखेदिति** – त्रिकोणमध्ये प्रणवस्यान्तवह्निबीजं, साध्यनाम विलिख्य विहितबीजेन वेष्टयेत् । पञ्चकोणेषु – कोणस्यान्तर्वायुबीजं, तदन्तः साध्यनाम – अष्टकोणेषु प्रसिद्धचिन्तामणि (उपरि वक्ष्यमाणं) अन्तः साध्यं, पुनः षट्कोणेषु एकादशस्वराक्षरं विलिखेत् ।

**बिन्दौ लक्ष्मीमिति** – प्रथमं षट्कोणं विलिख्य । पुनः षोडशदलं, ततः भूपुरम् । ततः षट्कोणम् । मध्ये बिन्दुं तदन्तः श्रीं बीजम् । षट्कोणकोणेषु "कामदेवाये"ति कामगायत्रीवर्णान् ।

षट्कोणकोणेषु मायाबीजं श्रो(ह्रौ)मिति, पुनः षोडशदलेषु शूलिनी-वर्णान्, चतुरश्रकोणेषु श्रोंबीजम् । तद्बहिर्मातृकार्णैः साध्य-पुटितैर्वेष्टयेत् ।

**मध्ये मायायिति** – प्रथमं षट्कोणं, तदन्तः वृत्तं, तदन्तः हुमिति । षट्कोणे वं इति वरुणबीजम् । पुनर्द्वादशदलेषु......... भवति । तद्बहिः षोडशारं विलिख्य तन्मध्ये साध्यवायुबीज, पुनर्वृत्तत्रयं, आद्ये मूलेन, द्वितीये मायया, तृतीये वायुना वेष्टयेत् । सर्वसन्धिरेखायां वहिर्बीजं विलिखेत् । इति ॥

**शुक्रे चन्द्रमिति** – अयमर्थः – प्रथमं पञ्चकोणं विलिख्य, तदन्तर्वृत्तं, तद्बहिः षट्कोणं, षट्सुकोणेषु कामबीजं, सबीजकमिति कामबीजम् । तद्बहिः अर्धचन्द्राकारं वारुणपुरकोणे अर्धनारीश्वर-चिन्तामणिबीज सप्तविंशतितमपटले वक्ष्यमाणं विलिख्य तद्बहिर्वृत्तं विलिख्य, तद्बहिः षोडशदलेषु शूलिनीमन्त्रवर्णान् विलिखेत् इति ।

**षट्त्रिंशत्कोष्ठकोष्ठेति** – प्रथमं पूर्वपश्चिमतः सप्तारेखा विलिख्य तदुपरि दक्षिणोत्तरतः सप्तरेखा विलिख्य – एवं विलिखिते षट्त्रिंशत्कोष्ठानि जायन्ते । तेषु कोष्ठेषु प्रतिकोष्ठं त्रिकोणचतुष्टयं विलिखेत् । अस्त्यत्रोपदेशः चतुरश्राकारकोष्ठे अग्निकोणमारभ्य वायव्यकोणावधि कांचिद्रेखां ईशकोणमारभ्य निर्ऋतिकोणपर्यन्तं कांचिद्रेखां विलिख्य एवं विलिखिते तत्र त्रिकोणचतुष्टयं जायते । एवं विलिखिते शताधिकचतुश्चत्वारिंशत्कोष्ठानि भवन्ति । तेषु कोणोदरेषु रत्नधां मायापूर्वं षोडशाक्षराणि विलिखेत् । चतुर्विंशति-शूलोदरेषु सर्वमर्मसु तु रकारं (रं) इति विलिखेदिति विवेकः ।

सावधानेन चेतसा अर्धरात्रौ जपेन्मन्त्रम् ॥ ऐङ्कारं वृत्तमध्ये इति - प्रथमं चतुर्दलं पद्मं विलिख्य तत्कर्णिकायां "यस्त ऊरू"

ऋच: प्रथमपादाद्याक्षरं एकारं विलिख्य चतुर्दले, "दम्पतीशे"ति चतुर्वर्णं विलिख्य तद्बहिर्दशदलं पद्मं विलिख्य तेषु कामबीजं चिन्तामरिग्बीजं च अन्तरन्तर्विलिख्य तेषु यस्त ऊरू विहरत्यन्तर इति दशार्णं विलिख्य, बहि: षोडशदलं पद्मं विलिख्य तेषु (तद्दलेषु) प्रणवपूर्वकशूलिनीमन्त्रवर्णांश्च विलिख्य "योनिं यो अन्तरारेर्गमितो नाशायमसि" इति षोडशवर्णांश्च विलिख्य तद्बाह्ये साध्यवर्णेन वेष्टयेत् ।

**मध्येनामसमेति –**

प्रथमं चतुरश्रद्वयं पुटितरूपेण अष्टकोणं तन्मध्ये साध्तनाम विलिख्य – तद्बहिरष्टदलं पद्मं विलिख्य तेषु शूलिनीवर्णान् द्वन्द्वशो विलिख्य तद्बहिश्चतुरश्रद्वयं पुटित्वा विलिख्य तस्याष्टकोणेषु लक्ष्मी-माया – चिन्तामणिबीजानि विलिख्य तद्बहिर्वृत्तं मातृकया वेष्टयेत् ।

**मायागर्भस्य साध्यमिति –**

प्रथमं अष्टदलपद्मं विलिख्य – तन्मध्ये साध्यनाम विसिख्य – तन्मध्ये वायुबीजं महीबीजं च विलिख्य पुन: अष्टदलेषु – श्रीं ह्रीं रूं रुद्राय नम: इति रुद्रमन्त्रं विलिख्य – तेषु (तद्दलेषु) प्रणवपूर्वक-शूसिनी मन्त्रवर्णान् विलिख्य तद्बहिरष्टकोणं विलिख्य तेषु काल-वर्णाख्यं मकारं विलिख्य तद्बहि: साध्येन मायया पञ्चाशद्वर्णैश्च क्रमेण वेष्टयेत् ।

सौकुमारपट्टम् पित्तळै ।

दीपागारेति दीपेत्यष्टादशसङ्ख्या ।

।। इत:परं तालपत्रमयमातृकायां बहुत्र पत्राणि कीटजग्धतया जीर्णानि अर्धावशिष्टानि विशीर्णानि इति कृत्वा प्रकाशयितुं न शक्यते ।।

।। शुभं भूयात् ।।

